# शक्रादिकृता ब्रह्मस्तुतिः

एवं कृते ततो देवा दूयमानेन चेतसा।
जग्मुर्जगद्गुरुं द्रष्टुं शरणं कमलोद्भवम्॥ १ ॥

ऐसा कर देने पर इन्द्रआदि देवतागण अति दुःखी चित्त से कमलयोनि ब्रह्मा की शरण में, उन्हें देखने के लिये गये॥ १ ॥

निवेदितास्ते शक्राद्याः शिरोभिर्धरणिं गताः।
तुष्टुवुः स्पष्टवर्णैर्नु वचोभिः कमलासनम्॥ २ ॥

और वहाँ जाकर उन इन्द्र आदि देवगणों ने अपने ऊपर बीती हुई सम्पूर्ण घटनाओं को उनसे निवेदित करने का विचार किया। वहाँ जाकर वे अपने अपने शिर पृथ्वी पर टेक कर बैठ गये। फिर सबों ने स्पष्ट वर्ण तथा अर्थ वाले वाक्यों से उन कमलासन भगवान् ब्रह्मा की इस प्रकार स्तुति की॥ २ ॥

**देवा०**

त्वमोऽङ्कारस्याङ्कुराय प्रसूतो विश्वस्यात्माऽनन्तभेदस्य पूर्वम्।
सम्भूतस्यानन्तरं सत्त्वमूर्त्ते संहारेच्छोस्ते नमो रुद्रमूर्ते॥ ३ ॥

देव—'हे विश्वात्मन्! इस अनन्त भेदवाले विश्व के तुम मूल कारण तथा उत्पत्ति के निमित्त एवं ओंकारस्वरूप हो। तुम्हारा वह पूर्वकालीन ओंकारस्वरूप ही इस जगत् वृक्ष का अङ्कुर है। हे सत्त्वमूर्ति! रचना के पीछे तुम्हीं सत्त्वरूप होकर उसका पालन करते हो, और हे रुद्रमूर्ते! संहार के अवसर पर तुम्ही भयानक रूप धारण कर सबका संहार करते हो॥ ३ ॥

व्यक्तिं नीत्वा त्वं वपुः स्वं महिम्ना तस्मादण्डात् स्वाभिधानादचिन्त्यः।
द्यावापृथ्व्योरूर्ध्वखण्डावराभ्यां ह्यण्डादस्मात् त्वं विभागं करोषि॥४॥

ऐसे त्रिगुण स्वरूप आप को हम सब लोग नमस्कार कर रहे हैं।

तुम अपनी महिमा से अपने शरीर को अण्ड रूप में परिणत करके उस अण्ड का ऊपर और नीचे— दो विभाग कर पृथ्वी और स्वर्ग की रचना करते हो। तुम अचिन्त्य हो ॥ ४ ॥

**व्यक्तं मेरौ यज्ञनायुस्तवाभूद्देवं विद्मस्त्वत्प्रणीतश्चकास्ति।**
**व्यक्तं देवा जन्मतः शाश्वतस्य द्यौस्ते मूर्धालोचने चन्द्रसूर्यौ ॥ ५ ॥**

मेरु पर्वत पर आपने जो देवादि प्राणियों की आयुःसीमा निर्धारित की थी वही आप द्वारा निर्मित विधान अभी भी प्रचलित हैं; यह हम स्पष्ट रूप से जानते हैं। हे देव! तुम अजन्मा एवं सनातन हो, स्वर्ग तुम्हारा मस्तक है, सूर्य और चन्द्रमा तुम्हारे नेत्र हैं ॥ ५ ॥

**व्यालाः केशाः श्रोत्ररन्ध्रा दिशस्ते पादौ भूमिर्नाभिरन्ध्रे समुद्राः।**
**मायाकारः कारणं त्वं प्रसिद्धो वेदैः शान्तो ज्योतिषा त्वं विमुक्तः ॥ ६ ॥**

सर्प तुम्हारे केश हैं, दिशाएँ कान हैं, पृथ्वी चरण है, समुद्र नाभि है। तुम्हीं माया के रचनेवाले तथा समस्त जगत् के आदि कारण हो। वेद-समूह तुम्हें शान्त और ज्योति से विमुक्त कहते हैं ॥ ६ ॥

**वेदार्थेषु त्वां विवृण्वन्ति बुध्वा हृत्पद्मान्तःसन्निविष्टं पुराणम्।**
**त्वामात्मानं लब्धयोगा गृणन्ति साङ्ख्यैर्यास्ताः सप्त सूक्ष्माः प्रणीताः ॥७ ॥**

बुद्धिमान् लोग वेदों के अर्थों से तुम्हे भलीभाँति जानकर हृदय कमल में विराजित पुराणपुरुष कहकर निश्चित करते हैं। सांख्य एवं योग के जानने वाले तुम्हें आत्मा कहकर मानते हैं। उनके द्वारा सात सूक्ष्म पदार्थ कहे गये हैं ॥ ७ ॥

**तासां हेतुर्याऽष्टमी चापि गीता तस्यां तस्यां गीयसे वै त्वमन्तम्।**
**दृष्ट्वा मूर्तिं स्थूलसूक्ष्मां चकार देवैर्भावाः कारणैः कैश्चिदुक्ताः ॥८ ॥**

एवं उनके कारण स्वरूप आठवाँ पदार्थ तम है, इस प्रकार आठ पदार्थ— उनके यहाँ— जो माने गये हैं, उन सब में तुम विद्यमान माने गये हो। यही नहीं, तुम उससे भी परे माने गये हो ॥८ ॥

**सम्भूतास्ते त्वत्त एवादिसर्गे भूयस्तां वां वासनां तेऽभ्युपेयुः।**
**त्वत्सङ्कल्पानन्तमायाप्तिगूढकालो मेयो ध्वस्तसङ्ख्याविकल्पः ॥९ ॥**

आदिकाल में तुमने किसी अज्ञात कारणवश अपनी मूर्ति को स्थूल तथा सूक्ष्म रूप में विविध पदार्थों में परिणत किया था।

देवादि जितने शरीरी हैं— वे सभी आपसे उद्भूत हुए हैं और आपके सङ्कल्प के अनुरूप ही उन लोगों की वैसी वैसी वासनाएँ भी उत्पन्न हुई हैं। हे देव! तुम अनन्त माया द्वारा निगूढ़ हो, एवं कल्पित संख्याओं से भी अतीत हो, काल स्वरूप हो॥ ९॥

**भावाभावव्यक्तिसंहारहेतुस्त्वं सोऽनन्तस्तस्य कर्तासि चात्मन्।**
**येऽन्ये सूक्ष्माः सन्ति तेभ्योऽभिगीतः स्थूला भावाश्चावृतारश्च तेषाम्॥१०॥**

आत्म-स्वरूप धारण करने वाले भगवन्! तुम्ही इस जगत् के सदसत् जितने पदार्थ हैं, सबके विनाश के कारण हो। अनन्त रूप धारण कर उन सबों के तुम्ही करने वाले भी हो॥ १०॥

**तेभ्यः स्थूलैस्तैः पुराणैः प्रणीतो भूतं भव्यं चैवमुद्भूतिभाजाम्।**
**भावे भावे भावितं त्वां युनक्ति युक्तं युक्तं व्यक्तिभावान्निरस्य॥ ११॥**

संसार में जो कुछ भी सूक्ष्म तथा उनकी अपेक्षा स्थूल पदार्थ विद्यमान हैं, तथा अन्य जो कुछ पदार्थ उन स्थूल पदार्थों को भी आवृत (ढकने वाले) करने वाले हैं, तुम उन सबों से स्थूल हो। सनातन हो। भूत भव्य— सब कुछ हो। तुम अपने सङ्कल्प द्वारा प्रत्येक पदार्थों में अनुप्रविष्ट होकर व्यक्त होते हो, एवं उन उन पदार्थों से निर्गत भी होते हो॥ ११॥

**इत्थं देवो भक्तिभाजां शरण्यस्त्राता गोप्ता नो भवानन्तमूर्तिः॥ १२॥**

*श्रीमत्स्यपुराणे शक्रादिकृता ब्रह्मस्तुतिः सम्पूर्णा॥*

*(१५४ अध्याय श्लोक सं० ५ तः १५ पर्यन्ता)*

इस प्रकार सभी व्यक्त भावों का निरसन करके भी तुम स्थित हो। तुम अनन्त मूर्ति धारण करने वाले हो, तुम्हारा स्वभाव ही यह है। तुम अपने भक्तजनों को शरण देने वाले, त्राण करने वाले तथा रक्षक सब कुछ हो"॥ १२॥

*श्री मत्स्य पुराण में वर्णित शक्रादि कृत ब्रह्मा की स्तुति सम्पूर्ण॥*



# हिरण्यकशिपुकृतं ब्रह्मणः स्तोत्रम्

**हिरण्यकशिपु०**

**कल्पान्ते कालसृष्टेन योऽन्धेन तमसाऽऽवृतम्।**
**अभिव्यनग् जगदिदं स्वयञ्ज्योतिः स्वरोचिषा॥ १॥**

**हिरण्यकशिपु—**

कल्प के अन्त में यह सारी सृष्टि काल द्वारा प्रेरित तमोगुण से, गहन अन्धकार से आच्छादित हो गयी थी। उस समय स्वयंप्रकाश-स्वरूप आपने अपने तेज से पुनः इसे प्रकट किया॥ १॥

**आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति।**
**रजःसत्त्वतमोधाम्ने पराय महते नमः॥ २॥**

आप ही अपने त्रिगुणमय रूप से इसकी रचना, रक्षा और संहार करते हैं। आप रजोगुण, सत्त्वगुण और तमोगुण के आश्रय हैं। आप ही सबसे पर (उत्कृष्ट) और महान् हैं। आपको मैं नमस्कार करता हूँ॥ २॥

**नमः आद्याय बीजाय ज्ञानविज्ञानमूर्तये।**
**प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे॥ ३॥**

आप ही जगत् के मूल कारण हैं। ज्ञान और विज्ञान आपकी मूर्ति हैं। प्राण, इन्द्रिय, मन और बुद्धि आदि विकारों के द्वारा आपने स्वयं को प्रकट किया है॥ ३॥

**त्वमीशिषे जगतस्तस्थुषश्च**
**प्राणेन मुख्येन पतिः प्रजानाम्।**
**चित्तस्य चित्तेर्मनइन्द्रियाणां**
**पतिर्महान् भूतगुणाशयेशः॥ ४॥**

आप मुख्यप्राण सूत्रात्मा के रूप से चराचर जगत् को अपने नियन्त्रण में रखते हैं। आप ही प्रजा के रक्षक भी हैं। भगवन्! चित्त,

चेतना, मन और इन्द्रियों के स्वामी आप ही हैं। पञ्चभूत, शब्दादि विषय और उनके संस्कारों के रचयिता भी महत्तत्त्व के रूप में आप ही हैं॥ ४॥

**त्वं सप्ततन्तून् वितनोषि तन्वा**
**त्रय्या चातुर्होत्रकविद्यया च।**
**त्वमेक आत्माऽऽत्मवतामनादि-**
**रनन्तपारः कविरन्तरात्मा॥ ५॥**

जो वेद, होता, अध्वर्यु, ब्रह्मा और उद्गाता— इन ऋत्विजों से होने वाले यज्ञ का प्रतिपादन करते हैं, वे आपके ही शरीर हैं। उन्हीं के द्वारा अग्निष्टोम आदि सात यज्ञों का आप विस्तार करते हैं। आप ही सम्पूर्ण प्राणियों के आत्मा है; क्योंकि आप अनादि, अनन्त, अपार, सर्वज्ञ और अन्तर्यामी हैं॥ ५॥

**त्वमेव कालोऽनिमिषो जनाना-**
**मायुर्लवाद्यवयवैः क्षिणोषि।**
**कूटस्थ आत्मा परमेष्ठ्यजो महां-**
**स्त्वं जीवलोकस्य च जीव आत्मा॥ ६॥**

आप ही काल हैं। आप प्रतिक्षण सावधान रहकर अपने क्षण, लव आदि विभागों के द्वारा लोगों की आयु क्षीण करते रहते हैं। फिर भी आप निर्विकार हैं; क्योंकि आप ज्ञानस्वरूप, परमेश्वर, अजन्मा महान् और सम्पूर्ण जीवों के जीवनदाता अन्तरात्मा हैं॥ ६॥

**त्वत्तः परं नापरमस्त्यनेज-**
**देजच्च किञ्चिद् व्यतिरिक्तमस्ति।**
**विद्याः कलास्ते तनवश्च सर्वा**
**हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः॥ ७॥**

प्रभो! कार्य कारण, चल और अचल ऐसी कोई भी वस्तु नहीं है जो आपसे भिन्न हो। समस्त विद्या और कलाएँ आपके शरीर हैं। आप त्रिगुणमयी माया से अतीत स्वयं ब्रह्म हैं। यह स्वर्णमय ब्रह्माण्ड आप के गर्भ में स्थित है। आप इसे अपने में से ही प्रकट करते हैं॥ ७॥

**व्यक्तं विभो स्थूलमिदं शरीरं**
**येनेन्द्रियप्राणमनोगुणाँस्त्वम्।**
**भुङ्क्षे स्थितो धामनि पारमेष्ठ्ये**
**अव्यक्त आत्मा पुरुषः पुराणः ॥ ८ ॥**

प्रभो! यह व्यक्त ब्रह्माण्ड आपका स्थूल शरीर है। इसके माध्यम से आप इन्द्रिय, प्राण और मन के विषयों का उपभोग करते हैं। किन्तु उस समय भी आप अपने परम ऐश्वर्यमय स्वरूप में ही स्थित रहते हैं। वस्तुतः आप पुराणपुरुष, स्थूल सूक्ष्म से परे ब्रह्मस्वरूप ही हैं ॥ ८ ॥

**अनन्ताव्यक्तरूपेण येनेदमखिलं ततम्।**
**चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ९ ॥**

*श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां सप्तमे स्कन्धे*
*हिरण्यकशिपुकृतं ब्रह्मणः स्तोत्रं सम्पूर्णम् ॥*

आप अपने अनन्त और अव्यक्त स्वरूप से सारे जगत् में व्याप्त हैं। चेतन और अचेतन— ये दोनों आपकी ही शक्तियाँ हैं। भगवन्! मैं आपको नमस्कार करता हूँ ॥ ९ ॥

*श्रीमद्भागवत महापुराण के सप्तम स्कन्ध में हिरण्यकशिपुकृत*
*ब्रह्मा का स्तोत्र सम्पूर्ण हुआ ॥*



# नारदकृता ब्रह्मस्तुतिः

**नारद०**

**सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्।**
**सर्वव्यापी भुवः स्पर्शादध्यतिष्ठद् दशाङ्गुलम्॥ १॥**

**नारद**—जिस (देवता) के हजारों मस्तक हैं, जिसके हजारों नेत्र हैं, एवं जिसके हजारों पैर (पाद) हैं— ऐसा एक पुरुष (ईश्वर) हैं। वह भूमि को चारों तरफ से आवृत कर रहा है। तथा वह दश अङ्गुल रूप इस छोटी सी सृष्टि को व्याप्त कर इससे बाहर भी स्थित है॥ १॥

**यद् भूतं यच्च वै भाव्यं सर्वमेव भवान्यतः।**
**ततो विश्वमिदं तात त्वत्तो भूतं भविष्यति॥ २॥**

इस संसार में जो कुछ भी हुआ है, या जो कुछ भी होगा— वह सब वस्तुतः आप ही हैं; अतः हे तात! यह समस्त विश्व, भले ही जो हो चुका हो या आगे जो होने वाला हो वह, सब कुछ आप से ही है॥ २॥

**त्वत्तो यज्ञः सर्वहुतः पृषदाज्यं पशुर्द्विधा।**
**ऋचस्त्वत्तोऽथ सामानि त्वत्त एवाभिजज्ञिरे॥ ३॥**

आप से ही यह सर्वहविर्भोजी यज्ञ दधिमिश्रित घृत तथा द्विविध पशु प्रादुर्भूत हुए। ऋग्वेद तथा सामवेद भी आप से ही प्राप्त हुए॥ ३॥

**त्वत्तो यज्ञास्त्वजायन्त त्वत्तोऽश्वाश्चैव दन्तिनः।**
**गावस्त्वत्तः समुद्भूताः त्वत्तो जाता वयोमृगाः॥ ४॥**

आप से ही यज्ञ तथा अश्व एवं हाथी उद्भूत हुए। गौएँ तथा मृग भी आप से ही उद्भूत हुए॥ ४॥

**त्वन्मुखाद् ब्राह्मणा जातास्त्वत्तः क्षत्रमजायत।**
**वैश्यास्तवोरुजाःशूद्रास्तव पद्भ्यां समुद्गताः॥ ५॥**

ब्राह्मणों की उत्पत्ति आप के मुख से हुई। क्षत्रियों की भी उत्पत्ति आप से ही हुई। आप की जङ्घाओं से वैश्यों की तथा पैरों से शूद्र जाति की उत्पत्ति हुई॥ ५॥

**अक्ष्णोः सूर्योऽनिलः श्रोत्राच्चन्द्रमा मनसस्तव।**
**प्राणोऽन्तःसुषिराज्जातो मुखादग्निरजायत॥ ६॥**

आपके नेत्रों से सूर्य की, श्रोत्र से वायु की तथा मन से चन्द्रमा की उत्पत्ति हुई। अपके शरीरस्थ आभ्यन्तर रिक्त स्थानों से प्राणों की तथा आपके मुख से अग्नि की उत्पत्ति हुई॥ ६॥

**नाभितो गगनं द्यौश्च शिरसः समवर्तत।**
**दिशः श्रोत्रात् क्षितिः पद्भ्यां त्वत्तः सर्वमभूदिदम्॥ ७॥**

आपकी नाभि से आकाश की तथा शिर से ऊर्ध्व लोक की श्रोत्र से दिशाओं की एवं आपके चरणों से अवशिष्ट सृष्टि की रचना हुई॥ ७॥

**न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः।**
**ससर्ज विश्वमखिलं बीजभूते तथा त्वयि॥ ८॥**

जैसे महान् वट वृक्ष छोंटे से बीज के अन्तर्भूत (स्थित) रहता है, उसी तरह यह समग्र सृष्टि आप में अन्तर्भूत रहती है॥ ८॥

**बीजाङ्कुरसमुद्भूतो न्यग्रोधः समुपस्थितः।**
**विस्तारं च यथा याति त्वत्तः सृष्टौ तथा जगत्॥ ९॥**

जैसे उस छोटे से बीज से अङ्कुरित होकर एक दिन विशाल वट वृक्ष बन जाता है, उसी तरह आपकी बनायी सृष्टि में यह विशाल जगत् अधिक से अधिक विस्तार प्राप्त कर रहा है॥ ९॥

**यथा हि कदली नान्या त्वक्पत्रेभ्योऽभिदृश्यते।**
**एवं विश्वमिदं नान्यत् त्वत्स्थमीश्वर दृश्यते॥ १०॥**

हे ईश्वर! जैसे केले का वृक्ष अपने पत्रों से भिन्न नहीं होता, उसी तरह यह समग्र संसार आप में ही स्थित दिखायी देता है॥ १०॥

**ह्लादिनी त्वयि शक्तिः सा त्वय्येका सहभाविनी।**
**ह्लादतापकरा मिश्रा त्वयि नो गुणवर्जिते॥ ११॥**

आप की वह (परा) शक्ति आप में एकीकृत होकर आपके साथ साथ रहती है, अतः एव वह प्रसन्नतादायक लगती है। परन्तु

वही शक्ति जब आप से पृथक् होकर निर्गुण रूप से अवस्थित होती है तो सामान्य प्राणियों के लिये मिश्रित रूप से हर्ष एवं विषाद का कारण बन जाती है ॥ ११ ॥

**पृथग्भूतैकभूताय सर्वभूताय ते नमः।**
**व्यक्तं प्रधानं पुरुषो विराट् सम्राट् तथा भवान्॥ १२ ॥**

जब आप उससे पृथक् होकर एकमात्र रूप में सब प्राणियों में व्यापक रूप से विराजमान रहते हैं, तब आप 'व्यक्त', 'प्रधान', 'पुरुष', 'विराट्' या 'सम्राट्' कहलाते हैं। आपके उस रूप को प्रणाम है ॥ १२ ॥

**सर्वस्मिन् सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक्।**
**सर्वं त्वत्तः समुद्भूतं नमः सर्वात्मने ततः ॥ १३ ॥**

आप समस्त प्राणियों में, समग्र जगत् में, सभी रूपों में सर्वतो-भावेन व्याप्त हैं। यह सब कुछ दृश्यमान जगत् आप से ही उद्भूत है। अतः हे सर्वात्मन्! आप को प्रणाम है ॥ १३ ॥

**सर्वात्मकोऽसि सर्वेश! सर्वभूतस्थितो यतः।**
**कथयामि ततः किं ते सर्वं वेत्सि हृदिस्थितम्॥ १४ ॥**

आप सब प्राणियों में आत्मा के रूप में विद्यमान हैं; क्योंकि आप सर्वव्यापक हैं। अतः आप सबके हृदय में रहते हुए सबकेभावों को जानते ही हैं तो मैं अपने विषय में अपनी वाणी से क्या कहूँ॥ १४ ॥

**यो मे मनोरथो देवः सफलः स त्वया कृतः।**
**तप्तं सुतप्तं सफलं यद् दृष्टोऽसि जगत्पते॥ १५ ॥**

*श्री पाद्मे पुराणे सृष्टिखण्डे नारदकृत ब्रह्म स्तुतिः सम्पूर्णा॥*

हे जगत्स्वामिन्! मेरे मन की जो कामना थी वह भी आपने सफल (पूर्ण) कर दी। मुझे तपस्या का फल मिल गया। आपके दर्शन से मैं अपने को कृतकृत्य मानता हूँ॥ १५ ॥

*पद्मपुराण, सृष्टि खंण्ड में वर्णित नारदकृत*
*ब्रह्मस्तुति सम्पूर्ण हुई।*



# महर्षिव्यासकृता ब्रह्मस्तुतिः

**प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययम्।**
**महादेवं महात्मानं सर्वस्य जगतः पतिम्॥ १॥**

हे देव! आप सबके स्वामी हैं, आप शाश्वत (अविनाशी) ध्रुव (स्थिर) एवं अव्यय (अनश्वर) हैं। आप देवाधिदेव हैं, आप महान् आत्मा हैं, तथा समस्त जगत् के पति हैं, अत: आपको प्रणाम है॥ १॥

**ब्रह्माणं लोकर्तारं सर्वज्ञमपराजितम्।**
**प्रभुं भूतभविष्यस्य साम्प्रतस्य च सत्पतिम्॥ २॥**

आप तीनों लोकों के स्रष्टा, सर्वज्ञ, किसी से भी अपराजेय, भूत, भविष्य एवं वर्तमान के अधिपति हैं, ऐसे आप ब्रह्मा को प्रणाम है॥ २॥

**ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः।**
**ऐश्वर्यं चैव धर्मश्च सहसिद्धिचतुष्टयः॥ ३॥**

जिसका ज्ञान अतुलनीय (सर्वश्रेष्ठ) है, जिस जगत्पति का वैराग्य भी अनुपम है। इसी तरह जिसके ऐश्वर्य और धर्माचरण की समानता नहीं की जा सकती। चतुर्वर्ग की सिद्धियाँ जिसके सम्मुख हाथ जोड़े खड़ी हैं— ऐसे ब्रह्मा जी को मैं प्रणाम करता हूँ॥ ३॥

**य इमान् पश्यते भावान् नित्यं सदसदात्मकान्।**
**आविशन्ति पुनस्तं वै क्रियाभावार्थमीश्वरम्॥ ४॥**

जो इन सत् एवं असत् भावों को नित्य देखता रहता है, फिर भी ये भाव सृष्टिरचना के समय (व्यहारकाल में) जिसमें आविष्ट होते रहते हैं, उस देवाधिदेव को मैं प्रणाम करता हूँ॥ ४॥

**लोककृल्लोकतत्त्वज्ञो योगमास्थाय तत्त्ववित्।**
**असृजत् सर्वभूतानि स्थावराणि चराणि च॥ ५॥**

जो लोक का स्रष्टा है, अत: लोक की वास्तविकता को जानता है, जिसने योगसाधन द्वारा तत्त्व का साक्षात्कार कर लिया है। एतदनन्तर

ही जिसने सभी अचल चल (स्थावर जङ्गम) प्राणियों की सृष्टि की है। ऐसे ब्रह्मा जी को मैं प्रणाम करता हूँ॥ ५ ॥

**तमजं विश्वकर्माणं चित्पतिं लोकसाक्षिणम्।**
**पुराणाख्यानजिज्ञासुर्व्रजामि शरणं प्रभुम्॥ ६ ॥**

मैं ऐसे अविनाशी, विश्वस्रष्टा, चित्स्वामी, लोकद्रष्टा प्रभु की शरण में इसलिये आया हूँ कि आप से मुझे पुराणों के दुर्लभ आख्यान सुनने को मिलें॥ ६ ॥

*वायुपुराणान्तर्गत महर्षिव्यासकृत ब्रह्मस्तुति सम्पूर्ण॥*



# स्वयम्भूस्तोत्रम्

**जगत्कृते स्वयम्भुवमनादिलीनमव्ययम्।**
**तनोर्विपज्जरात्मकृत्स्वयम्भुवं नमाम्यहम्॥ १॥**

जो जगत् के लिये आदिपुरुष है, स्वयं अनादि है, अविनाशी है। जो प्राणियों को शरीरों के लिये विपत्ति (दु:ख) एवं जरा (जीर्णता) का कर्त्ता है ऐसे स्वयम्भु विधाता को मेरा प्रणाम है॥ १॥

**सहस्रपत्रपङ्कजं लसत्सुकर्णिकोद्भवम्।**
**समस्तकामनाप्रदं स्वयम्भुवं नमाम्यहम्॥ २॥**

सहस्रदल कमल की कर्णिकाओं से उत्पन्न, भक्तों की सभी कामनाओं के पूरक भगवान् ब्रह्मा को मैं प्रणाम करता हूँ॥ २॥

**सहस्रभानुरञ्जनं नियुतचन्द्रनन्दनम्।**
**सुरादिलोकवन्दनं स्वयम्भुवं नमाम्यहम्॥ ३॥**

हजारों सूर्यों की कान्ति वाले तथा लाखों चन्द्रमाओं की आभा वाले एवं देवलोक आदि सभी लोकों से वन्दित भगवान् ब्रह्मा (स्वयम्भु) को मैं प्रणाम करता हूँ॥ ३॥

**त्वमेव राजसे गुणैर्भुवि स्थितो विराजसे।**
**त्रिधातुकं विभावसे स्वयम्भुवं नमाम्यहम्॥ ४॥**

सत्त्व, रजस्, तमस्— इन तीनों गुणों से आप युक्त हैं। इन्हीं के सहारे से आप विश्व में शोभित होते हैं। आप त्रैधातुक (वात, कफ, पित्तयुक्त) हैं, अत: हे ब्रह्मन्! आपको प्रणाम है॥ ४॥

**अयं क इत्ययं हृदा मीमांसितुं न शक्तवान्।**
**प्रघासमात्रमीक्षितः स्वयम्भुवं नमाम्यहम्॥ ५॥**

आप के विषय में— 'आप वास्तव में क्या हैं?'— इस पर बहुत अधिक विचार करने पर भी मैं अभी तक कुछ भी नहीं समझ पाया। मैं तो जीवनपर्यन्त अपनी उदरपूर्ति में ही लगा रहा। अतः विवश होकर हे विधातः! आपको प्रणाम करता हूँ॥ ५॥

पठन्ति ये नरा मुदा स्वयम्भुवः स्तुतिं सदा।
त्रिवर्गसिद्धिमाप्य ते लभन्ति मुक्तिमेव ताम्॥ ६॥

*श्रीबृहत्स्वयम्भुपुराणोद्धृतं शिखिनिर्मितं*
*स्वयम्भूस्तोत्रं समाप्तम्॥*

जो भक्त प्रसन्न मन से स्वयम्भू के इस स्तोत्र का नित्य पाठ करते हैं, वे धर्म, अर्थ, काम— इस त्रिवर्ग की प्राप्ति के साथ साथ मोक्ष भी अधिगत कर लेते हैं॥ ६॥

*बृहत्स्वयम्भुपुराण में उद्धृत शिखिनिर्मित*
*स्वयम्भूस्तोत्र समाप्त॥*



# स्वयम्भूस्तवः

**नमस्ते विश्वरूपाय ज्योतीरूपाय ते नमः।**
**नमः स्वयम्भुवे नित्यं जगदुद्धारहेतवे॥ १॥**

हे विश्वरूप! हे ज्योतिःस्वरूप! आपको प्रणाम है। हे स्वयम्भो! आप इस जगत् के एकमात्र उद्धारक हैं, अतः आपको प्रणाम है॥ १॥

**त्वं बुद्धस्त्वं च धर्मो दशबलतनयस्त्वं तथा बोधिसत्त्व-**
**स्त्वं भिक्षुः श्रावकस्त्वं कुलिशवरधरस्त्वं तथा धर्मधातुः।**
**त्वं ब्रह्मा त्वं च विष्णुः प्रमथगणपतिस्त्वं महेन्द्रो यमस्त्वं**
**त्वं पाशी त्वं धनेशस्त्वमनलपवनौ नैर्ऋतस्त्वं महेशः॥ २॥**

हे भगवन्! आप ही बुद्ध हैं, आप ही तदुपदिष्ट धर्मरूप हैं, आप बुद्धपुत्र (बुद्धशिष्य) हैं, आप बोधिसत्त्व हैं। आप ही भिक्षु हैं, आप ही श्रावक हैं, आप ही वज्रधारी (इन्द्र) हैं, आप ही धर्मधातु (बुद्धोपदेश) हैं। मैं तो आप को ही ब्रह्मा, विष्णु तथा शङ्कर, इन्द्र, यम, वरुण, कुबेर मानता हूँ। मेरी दृष्टि में आप ही अग्नि तथा वायु हैं। आप ही निर्ऋति दिशा के अधिपति एवं देवाधिदेव हैं॥ २॥

**भूताः प्रेताश्च तिर्यक् त्वममरदितिर्मानवास्त्वं वयं च**
**चातुर्योनिस्त्वमेव त्रिगुणवरतनुः पञ्चज्ञानैकमूर्तिः।**
**वर्णास्त्वं कालमासा दिनमपि रजनी पञ्चभूतास्त्वमेव**
**अन्नं रत्नं च सर्वं मतिरिति महती नः सदा त्वां नताः स्मः॥ ३॥**

हमारी बुद्धि (समझ) से आप ही भूत, प्रेत, तिर्यग्योनिगत प्राणियों में व्याप्त हैं। आप ही देवता राक्षस एवं मानव रूपों में हैं। हम सब में भी आप का ही रूप है। चातुर्महाराजिकदेवों में भी आपका ही रूप है। आप त्रिगुणशरीरधारी हैं। आप पञ्चज्ञानों के समष्टि आकार हैं। आप ही वर्ण (अक्षर) हैं। आप ही काल एवं मास, दिन

एवं रात्रि, यहाँ तक कि पाँचों महाभूत आप ही हैं। भूमि से निकलने वाले सभी प्रकार के अन्न तथा खनिज पदार्थ हैं। अतः हम आपके सम्मुख सदा प्रणत हैं॥ ३॥

**पञ्चज्ञानेन बुद्धान् सृजसि स्वयमथो बोधिसत्वांश्च पञ्च-**
**भूतानेतान् गुणांस्त्रीनजहरिगिरिशान् स्थावराञ्जङ्गमांश्च।**
**सर्वेषां चेतसि स्थो नटयसि सकलं सर्वतो रक्षकोऽसि**
**त्वं बीजं चाङ्कुरस्त्वं फलमपि विटपी सर्वदा त्वां नताः स्मः॥ ४॥**

आप स्वयं पञ्चज्ञान के प्रभाव से बुद्धों की तथा बोधिसत्त्वों की सृष्टि करते हो, इसी तरह पञ्चभूतों की, तीन गुणों की, ब्रह्मा विष्णु, शङ्कर— तीन देवों की, स्थावर जङ्गम प्राणियों की सृष्टि आप ही करते हो। सभी प्राणियों के हृदय में विराजमान होकर उन्हें स्व स्व प्रारब्धानुसार आप ही नचाते हो। आप सबके प्रतिपालक हो। आप ही इस समग्र सृष्टि के बीज भी हो अङ्कुर भी; आप ही संसार, वृक्ष हो। आप ही इसके फल हो। अतः हम आपको सर्वदा प्रणाम करते हैं॥ ४॥

**श्रेष्ठं क्षेत्रं त्वमस्मिन् प्रभवसि भगवान् सर्वतः सर्वदेवान्**
**ग्रामाँस्तीर्थानि देशान् नृपसहितनरान् नैगमांश्चापि सर्वान्।**
**द्वीपेष्वन्येष्वपि त्वं विभजसि सकलं ज्योतिषां संविभागम्**
**बीजीभूतैकदीपोऽस्यखिलमपि जगद्व्यापकस्त्वां नताः स्मः॥ ५॥**

आप ही इस समस्त सृष्टि के उचित क्षेत्र हैं। सामर्थ्यशाली आप ही सर्वत्र इन सब देवों को, ग्रामों को, तीर्थों को, देशों को, राजा सहित प्रजा को, सभी निगम-जनपदों की रचना करते हैं। इसी तरह आप अन्य द्वीपों में भी समग्र तारागण एवं नक्षत्रसमूहों की विभागशः रचना करते हैं। अतः आप इस समस्त संसार के एकमात्र बीज (आदिकारण) हैं, प्रकाशस्तम्भ हैं। आप सर्वजगत् में व्याप्त हैं, अतः आपको हमारा सादर प्रणाम है॥ ५॥

**ज्योतिस्त्वदीयं परितो विसारि सितारुणश्यामकपीतरक्तम्।**
**दृष्टं ततः सर्वमिदं भवन्तं मन्यामहे त्वां प्रणताः स्म नित्यम्॥ ६॥**

आप का ही प्रकाश सब तरफ फैला हुआ है। कहीं वह श्वेत है तो कहीं अरुण या फिर काला या पीला। इन सबकी रचना में भी हम आप को ही कारण मानते हैं। अतः हम आपको नित्य प्रणाम करते हैं॥ ६॥

**नुतिं महाराजकृतां ये पठिष्यन्ति मानवाः।**
**चक्रवर्तिपदं प्राप्य ते हि मुक्तिमवाप्नुयुः॥ ७॥**

*श्रीचातुर्महाराजकृतं स्वयम्भूस्तवं समाप्तम्॥*

इस तरह चातुर्महाराज देव (दिक्पाल) द्वारा इस स्तोत्र का जो श्रद्धालु पुरुष नित्य पाठ करेंगे वे पहले चक्रवर्ति-पद प्राप्त कर (समग्र ऐहिक सुख भोगकर) अन्त में इस भवबन्धन से मुक्ति (मोक्ष) अवश्य ही प्राप्त कर लेंगे॥ ७॥

*चातुर्महाराजकृत स्वयम्भूस्तव समाप्त॥*



पद्मपुराणत:—

## रुद्रप्रोक्तं ब्रह्मकवचम्

**नारायणादनन्तरं रुद्रो भक्त्या विरञ्चिनम्।**
**तुष्टाव प्रणतो भूत्वा ब्रह्माणं कमलोद्भवम्॥ १॥**

भगवान् विष्णु द्वारा ब्रह्मा की स्तुति करने के बाद, भगवान् शङ्कर ने भी भक्तिपूर्वक आदिदेव, पद्मयोनि ब्रह्मा की इस प्रकार स्तुति आरम्भ की॥ १॥

**रुद्र०**

**नमः कमलपत्राक्ष नमस्ते पद्मजन्मने।**
**नमः सुरासुरगुरो कारिणे परमात्मने॥ २॥**

रुद्र—हे कमलपत्राक्ष! हे पद्मयोने! हे देव-दानवगुरो! हे जगत्स्रष्टा! हे परमात्मन्! आपको प्रणाम है॥ २॥

**नमस्ते सर्वदेवेश नमो वै मोहनाशन!**
**विष्णोर्नाभिस्थितवते कमलासनजन्मने॥ ३॥**

हे समस्त देवताओं के स्वामिन्! हे मोह (अविद्या) नाशक! हे विष्णु की नाभि में पद्मासन पर विराजमान रहनेवाले! हे पद्मयोनि! आपको प्रणाम है॥ ३॥

**नमो विद्रुमरक्ताङ्ग पाणिपल्लव शोभिने।**
**शरणं त्वां प्रपन्नोऽस्मि त्राहि मां भवसंसृतेः॥ ४॥**

हे विद्रुम (मूंगा) के समान लाल रंग से शोभित करकमलवाले ब्रह्मदेव! मैं आपका शरणागत हूँ। आप मुझे इस भवबन्धन से मुक्ति दिलाइये॥ ४॥

**पूर्वं नीलाम्बुदाकारं कुड्मलं ते पितामह!**
**दृष्ट्वा रक्तमुखं भूयः पत्रकेशरसंयुतम्॥ ५॥**

हे पितामह! पहले जो कमल का फूल कली के रूप में था,

वही आगे चलकर मनोहर पत्र एवं केशर से युक्त होकर रक्तवर्ण में नयनाभिराम हो गया॥ ५॥

**पद्मं चानेकपत्रान्तमसङ्ख्यातनिरञ्जनम्।**
**तत्र त्वया स्थितेनैषा सृष्टिश्चैव प्रवर्तिता॥ ६॥**

ऐसी अनेक पत्तियों वाले कमल पुष्प से उत्पन्न होकर तथा उसी पर विराजमान होकर आपने इस समस्त संसार की सृष्टि की है॥ ६॥

**त्वां मुक्त्वा नान्यतस्त्राणं जगद्वन्द्य नमोऽस्तु ते॥ ७॥**

अतः हे जगत्पूज्य! अब आपको छोड़कर मुझे अन्य किसी के सहारे इस दुःख से मुक्ति नहीं मिलने वाली है॥ ७॥

**ब्रह्मा वै पातु मे पादौ जङ्घे वै कमलासनः।**
**विरञ्चिर्मे कटिं पातु सृष्टिकृद् गुह्यमेव च॥ ८॥**

ब्रह्मा के रूप में आप मेरे पैरों की रक्षा करें और कमलासन के रूप में मेरी जङ्घाओं की रक्षा करे। आपका 'विरञ्चि' नाम मेरी कटि की रक्षा करे तथा 'सृष्टिकर्ता' नाम मेरे गुह्य अङ्ग की रक्षा करे॥ ८॥

**नाभिं पद्मनिभः पातु जठरं चतुराननः।**
**उरस्तु विश्वसृक् पातु हृदयं पातु पद्मजः॥ ९॥**

इसी तरह आपका 'पद्मनिभ' नाम मेरी नाभि की रक्षा करे। और आप 'चतुरानन' नाम के प्रभाव से मेरे उदर की रक्षा करे। आपका 'विश्वसृक्' नाम मेरी छाती की रक्षा करे और 'पद्मज' नाम मेरे हृदय की॥ ९॥

**सावित्रीपतिर्मे कण्ठं हृषीकेशो मुखं मम।**
**पद्मवर्णश्च नयने परमात्मा शिरो मम॥ १०॥**

'सावित्रीपति' मेरे कण्ठ की तथा आपका 'हृषीकेश' नाम मेरे मुख की रक्षा करे। आपका 'पद्मवर्ण' नाम मेरे नेत्रों की रक्षा करे और 'परमात्मा' नाम से आप मेरे शिर की रक्षा करें॥ १०॥

**एवं न्यस्य गुरोर्नाम शङ्करो नाम शङ्करः।**

इस तरह गुरु (ब्रह्मा) का नाम ले लेकर भगवान् शङ्कर ने अपने समग्र शरीर के कल्याण की याचना की।

**नमस्ते भगवन् ब्रह्मन्नित्युक्त्वा विरराम ह॥ ११ ॥**

और अन्त में वे (शङ्कर) 'हे भगवन्! आपको प्रणाम है'— यह कहकर चुप हो गये॥ ११ ॥

*पद्मपुराण के अन्तर्गत रूद्रप्रोक्त ब्रह्मकवच सम्पूर्ण॥*



# श्रीरामकृतं ब्रह्मशतनामस्तोत्रम्

**राम०**

**नमामि लोककर्तारं प्रजापतिं सुरार्चितम्।**
**देवनाथं लोकनाथं प्रजानाथं जगत्पतिम्॥ १॥**

**श्रीरामचन्द्र—** हे लोक का निर्माण करने वाले, प्रजापति! देववन्दित! देवनाथ! लोकनाथ! प्रजानाथ! एवं जगत् के स्वामिन्! मैं आपको प्रणाम करता हूँ॥ १॥

**नमस्ते देव देवेश सुरासुरनमस्कृत!**
**भूतभव्यभवन्नाथ हरिपिङ्गललोचन॥ २॥**

हे देवदेवेश! हे देवों एवं दानवों द्वारा पूजित! हे भूत भविष्यत् एवं वर्तमान के स्वामिन्! हे हरित एवं पिङ्गलनेत्र! आपको प्रणाम है॥ २॥

**बालस्त्वं वृद्धरूपश्च मृगचर्मासनाम्बरः।**
**तारणश्चासि देवस्त्वं त्रैलोक्यप्रभुरीश्वरः॥ ३॥**

आप बालक भी हैं और वृद्ध भी। आप मृगचर्म के आसन पर विराजमान रहते हैं तथा उसी चर्म को वस्त्ररूप में धारण भी करते हैं। आप भक्तजन को भवसागर से तारने वाले हैं। आप त्रिलोकी के स्वामी तथा देवाधिदेव तथा ईश्वर हैं॥ ३॥

**हिरण्यगर्भ पद्मगर्भ वेदगर्भ स्मृतिप्रदः।**
**महासिद्धो महापद्मी महादण्डी च मेखली॥ ४॥**

आप ही हिरण्यगर्भ, पद्मगर्भ, वेदगर्भ एवं स्मृतिप्रदाता हैं। आप महासिद्ध, महापद्मी, महादण्डी एवं मेखली भी कहलाते हैं॥४॥

**कालश्च कालरूपी च नीलग्रीवो विदाम्वरः।**
**वेदकर्ताऽर्भको नित्यः पशूनाम्पतिरव्ययः॥ ५॥**

आप काल, कालरूपी, नीलग्रीवा वाले, ज्ञानियों में श्रेष्ठ, वेदकर्ता, अर्भक, नित्य, पशुपति एवं अव्यय भी कहलाते हैं॥ ५॥

**दर्भपाणिर्हंसकेतुः कर्ता हर्ता हरो हरिः।**
**जटी मुण्डी शिखी दण्डी लगुडी च महायशाः॥ ६॥**

आप दर्भपाणि, हंसकेतु, कर्ता, हर्ता, हर तथा हरि कहलाते हैं और जटी, मुण्डी, शिखी, दण्डी, लगुड़ी और महायशा भी आपको ही कहते हैं॥ ६॥

**भूतेश्वरः सुराध्यक्षः सर्वात्मा सर्वभावनः।**
**सर्वगः सर्वहारी च स्त्रष्टा च गुरुरव्ययः॥ ७॥**

आप को भक्तजन भूतेश्वर, सुराध्यक्ष, सर्वात्मा एवं सर्वभावन भी कहते हैं। इसी तरह, सर्वत्रगति, सर्वहारी, स्त्रष्टा, ग़ुरु एवं अव्यय आप को ही कहते हैं॥ ७॥

**कमण्डलुधरो देवः स्त्रुक्स्त्रुवादिधरस्तथा।**
**हवनीयोऽर्चनीयश्च ॐकारो ज्येष्ठसामगः॥ ८॥**

आप कमण्डलुधारी, देवाधिदेव, स्त्रुग्धर तथा स्त्रुवाधर भी कहलाते हैं। आप का ही नाम हवनीय, अर्चनीय, ॐकार तथा ज्येष्ठ सामग है॥ ८॥

**मृत्युश्चैवामृतश्चैव पारियात्रश्च सुव्रतः।**
**ब्रह्मचारिव्रतधरो गुहावासी सुपङ्कजः॥ ९॥**

मृत्यु एवं अमृत आपके ही नाम हैं। तथा पारियात्र तथा सुव्रत आपके ही नाम हैं। आप ब्रह्मचर्यव्रत धारण करने वाले हैं। और गुहावासी एवं पङ्कज भी कहलाते हैं॥ ९॥

**अमरो दर्शनीयश्च बालसूर्यनिभस्तथा।**
**दक्षिणे वामतश्चापि पत्नीभ्यामुपसेवितः॥ १०॥**

आप अमर हैं, दर्शनीय हैं, बाल सूर्य के समान हैं। आप दक्षिण एवं वाम भाग में दो पत्नियों से सेवित हैं॥ १०॥

**भिक्षुश्च भिक्षुरूपश्च त्रिजटी लब्धनिशचयः।**
**चित्तवृत्तिकरः कामो मधुर्मधुकरस्तथा॥ ११॥**

आप भिक्षु हैं, भिक्षुरूप हैं, त्रिजटी हैं तथा लब्धनिश्चय भी कहलाते हैं। आप चित्तवृत्तिकर हैं, कामरूप हैं। मधु एवं मधुकर भी आपको कहते हैं॥ ११॥

**वानप्रस्थो वनगत आश्रमी पूजितस्तथा।**
**जगद्धाता च कर्ता च पुरुषः शाश्वतो ध्रुवः ॥ १२ ॥**

आप वानप्रस्थ हैं और वनगत भी। आपको भक्तजन आश्रमी एवं पूजित भी कहते हैं। आप जगद्धाता, कर्ता, पुरुष, शाश्वत एवं ध्रुव भी कहलाते हैं ॥ १२ ॥

**धर्माध्यक्षो विरूपाक्षस्त्रिधर्मो भूतभावनः।**
**त्रिवेदो बहुरूपश्च सूर्यायुतसमप्रभः ॥ १३ ॥**

आप धर्माध्यक्ष, विरूपाक्ष, त्रिधर्म, भूतभावन, त्रिवेद, बहुरूप एवं दश हजार सूर्यों की आभा वाले हैं ॥ १३ ॥

**मोहको बन्धकश्चैव दानवानां विशेषतः।**
**देवदेवश्च पद्माङ्कस्त्रिनेत्रोऽब्जजट्स्तथा ॥ १४ ॥**

आप मोहक हैं, बन्धक हैं, विशेषत दानवों के। आप देवाधिदेव हैं, पद्माङ्क हैं, त्रिनेत्र एवं पद्मयोनि भी कहलाते हैं ॥ १४ ॥

**हरिश्मश्रुर्धनुर्धारी भीमो धर्मपराक्रमः।**
**एवं स्तुतस्तु रामेण ब्रह्मा ब्रह्मविदाम्बरः ॥ १५ ॥**

*श्रीपाद्मे पुराणे सृष्टिखण्डे वर्णितं*
*ब्रह्मशतनामस्तोत्रं सम्पूर्णम् ॥*

आप हरितवर्ण की दाढ़ी-मूँछ वाले हैं। आप भयङ्कर धनुर्धारी हैं, धर्मपराक्रम भी हैं।''

इस तरह (इन नामों से) श्री रामचन्द्र जी ने ब्रह्मज्ञानियों में श्रेष्ठ ब्रह्मा जी की स्तुति की ॥ १५ ॥

*पद्मपुराण के सृष्टिखण्ड में ब्रह्मशतनामस्तोत्र सम्पूर्ण ॥*



# ब्रह्महृदयस्तोत्रम्

**ब्रह्माणं हंससङ्घायुतशरणवदावाहनं देववक्त्रम्,**
**विद्यादानैकहेतुं तिमिचरनयनाग्नीन्दुफुल्लारविन्दम्।**
**वागीशं वाग्गतिस्थं मतिमतविमलं बालार्कं चारुवर्णम्,**
**डाकिन्यालिङ्गितं तं सुरनरवरदं भावयेन्मूलपद्मे॥ १॥**

मैं, दश हजार श्रेष्ठ हंस जुते हुए रथ पर आरूढ़, देवता के मुख सदृश मुख वाले, विद्यादान के एकमात्र कारण, मछली की तरह सुन्दर आँखों वाले, अग्नि एवं चन्द्रमा की कान्तियुक्त एवं खिले कमल की तरह मुख वाले, वाणी के अधिपति, जिसके गुणगान में वाणी अपनी सीमा समझती हो, बुद्धिमानों में श्रेष्ठ, बाल सूर्य के समान अरुण आभा वाले, डाकिनी (स्वकीय पत्नी) द्वारा आलिङ्गित, देवों और मानवों को अभीप्सित वर देने वाले, नाभिमूल से निःसृत कमलपुष्प पर विराजमान देवाधिदेव ब्रह्मा जी का ध्यान करता हूँ॥१॥

**ब्रह्मज्ञानं निदानं गुणनिधिनयनं कारणानन्दयानम्,**
**ब्रह्मणं ब्रह्मबीजं रजनिजयजनं यागकार्यनुरागम्।**
**शोकातीतं विनीतं नरजलवचनं सर्वविद्याविधिज्ञम्,**
**सारात् सारं तरुं तं सकलतिमिरहं हंसगं पूजयामि॥ २॥**

जिसकी उत्पत्ति में ब्रह्मज्ञान ही कारण है, जो त्रिनेत्र या अष्टनेत्र कहलाता है, निरन्तर सात्त्विक आनन्द में रत, ब्रह्मज्ञान के बीजभूत, यज्ञ से प्रसन्न होने वाले, यज्ञ सम्बन्धी कार्यों में अनुराग रखने वाले, विगतशोक, विनययुक्त, जल की तरह आर्द्र वचन बोलने वाले, सभी विद्याओं की विधि-परम्परा के ज्ञाता, सार से भी उत्कृष्ट सार, संसारवृक्षभूत, समस्त अज्ञानान्धकार के नाशक, हंसाधिरूढ भगवान् ब्रह्मा की मैं अर्चना करता हूँ॥ २॥

**एतत्सम्बन्धमार्गं नवनवदलगं वेदवेदाङ्गविज्ञम्,**
**मूलाम्भोजप्रकाशं तरुणरविशशिप्रोन्नताकारसारम्।**

**भावाख्यं भावसिद्धं जयजयदविधिं ध्यानगम्यं पुराणम्,**
**पाराख्यं पारणाय परजनजनितं ब्रह्मरूपं भजामि॥ ३॥**

इससे सम्बद्ध मार्ग वाले, नये नये पद्मपत्रों में रुचि रखने वाले, वेद एवं वेदाङ्ग शास्त्रों के ज्ञाता, नाभिकमल से निःसृत आभा से प्रकाशित, बाल सूर्य एवं चन्द्रमा की कान्ति से शोभित शरीर वाले भाव ध्यान से प्राप्त होने वाले विजयप्रदात्री विधि के ज्ञाता, ध्यानैकगम्य, पुराणपुरुष, भवसागर से पार उतारने में समर्थ, किसी विशिष्ट योगिजन द्वारा ही प्रापणीय उस ब्रह्मरूप की मैं सेवा करता हूँ॥ ३॥

**डाकिनीसहितं ब्रह्मध्यानं कृत्वा पठेत् स्तवम्।**
**पठनाद् धारणा न्मन्त्री योगिनां सङ्गतो भवेत्॥ ४॥**

डाकिनी (ब्रह्मपत्नी) सहित ब्रह्मा जी का ध्यान करके जो इस स्तोत्र का पाठ करेगा, इसके पाठ या धारण करने से वह आराधक (मन्त्र जप करने वाला) योगियों की कोटि में पहुँच जाता है॥ ४॥

**एतत् पठनमात्रेण महापातक नाशनम्॥ ५॥**

इस स्तोत्र के पाठमात्र से पाँचों ब्रह्महत्यादि पातक भी नष्ट हो जाते हैं॥ ५॥

**एकरूपं जगन्नाथं विशालनयनाम्बुजम्।**
**एवं ध्यात्वा पठेत् स्तोत्रं पठित्वा योगिराड् भवेत्॥ ६॥**

*श्रीरुद्रयामले उत्तरतन्त्रे सिद्धमन्त्रप्रकरणे त्रिंशे पटले वर्णितं ब्रह्महृदयस्तोत्रं समाप्तम्॥*

वे देव एकरूप हैं, जगत् के स्वामी हैं, उनके विशाल नेत्र कमल पुष्प के समान शोभित हैं।

इस तरह ध्यान करते हुए इस स्तोत्र का पाठ करता हुआ भक्त 'योगिराट्' की स्थिति में पहुँच जाता है॥ ६॥

*श्रीरुद्रयामलतन्त्र के उत्तरतन्त्र में सिद्धमन्त्रप्रकरण के तीसवें पटल में वर्णित ब्रह्महृदयस्तोत्र समाप्त॥*



# ब्रह्मतत्त्वविमर्शः

**लोमहर्षण०**

**तस्मै हिरण्यगर्भाय पुरुषायेश्वराय च।**
**अजाय प्रथमायैव विशिष्टाय प्रजात्मने।**
**ब्रह्मणे लोकतन्त्राय नमस्कृत्वा स्वयम्भुवे॥ १॥**
**महदाद्यं विशेषान्तं सवैरूप्यं सलक्षणम्।**
**पञ्चप्रमाणं षट्श्वेतं पुरुषाधिष्ठितं नुतम्।**
**असंशयात्प्रवक्ष्यामि भूतसर्गमनुत्तमम्॥ २॥**

उस हिरण्यगर्भ पुरुषेश्वर, अज, प्रथम, विशिष्ट, प्रजारूप, लोकतन्त्र स्वयम्भू ब्रह्मा को नमस्कार करके महत् तत्त्व से लेकर विशेष पर्यन्त नाना रूपों और लक्षणों के साथ पाँच प्रमाणों तथा छह श्वेतों वाली, पुरुष से अधिष्ठित वन्दनीय अनुत्तम भूतसृष्टि को निस्सन्देह बताऊँगा॥ १-२॥

**अव्यक्तकारणं यत्तु नित्यं सदसदात्मकम्।**
**प्रधानं प्रकृतिं चैव यमाहुस्तत्त्वचिन्तकाः॥ ३॥**
**गन्धवर्णरसैर्हीनं शब्दस्पर्शविवर्जितम्।**
**अजातं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम्॥ ४॥**
**जगद्योनिं महद्भूतं परं ब्रह्म सनातनम्।**
**विग्रहं सर्वभूतानामव्यक्तमभवत् किल॥ ५॥**
**अनाद्यन्तमजं सूक्ष्मं त्रिगुणं प्रभवाव्ययम्।**
**असाम्प्रतमविज्ञेयं ब्रह्माग्रे समवर्तत।**
**तस्याऽऽत्मना सर्वमिदं व्याप्तमासीत्तमोमयम्॥ ६॥**

अव्यक्त कारण जो सदा सत् असत् रूप में रहता है, जिसे तत्त्वचिन्तक जन प्रधान एवं प्रकृति कहते हैं तथा गन्ध, वर्ण और रस से शून्य, शब्द स्पर्श से रहित, अजात, ध्रुव, अक्षय्य, नित्य, अपने में

उपस्थित, जगत् का आदि कारण, महत् भूत, परब्रह्म, सनातन तथा समस्त भूतों के विग्रह (शरीर रूप) और अव्यक्त।

जो आदि अन्त से रहित, सूक्ष्म, त्रिगुणात्मक, सब की उत्पत्ति तथा प्रलय का स्थान, असाम्प्रत, अविज्ञेय ब्रह्मा पहले हुआ॥ ३-६॥

**गुणसाम्ये तदा तस्मिन्गुणभावे तमोमये॥ ७॥**
**सर्गकाले प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य वै।**
**गुणाभावाद्वाच्यमानो महान्प्रादुर्बभूव ह॥ ८॥**

आत्मा से यह समस्त तमोमय जगत व्याप्त था। उस गुणों की साम्यावस्था, तमोमय वह केवल एक गुण-भाव वाले, सृष्टिकाल में क्षेत्रज्ञ के अधिष्ठान से गुणयुक्त, महान् नामक तत्त्व प्रकट हुआ॥ ७-८॥

**सूक्ष्मेण महता सोऽथ अव्यक्तेन समावृतः।**
**सत्त्वोद्रिक्तो महानग्रे सत्त्वमात्रं प्रकाशकम्।**
**मनो महांश्च विज्ञेयो मनस्तत्कारणं स्मृतम्॥ ९॥**
**लिङ्गमात्रसमुत्पन्नः क्षेत्रज्ञाधिष्ठितस्तु सः।**
**धर्मादीनां तु रूपाणि लोकतत्त्वार्थहेतवः।**
**महांस्तु सृष्टिं कुरुते नोद्यमानः सिसृक्षया॥ १०॥**

जो पहले सूक्ष्म महत् अव्यक्त से आवृत था। पहले सत्त्वबहुल महान् प्रकट हुआ। सत्त्वमात्र प्रकाशरूप मन को ही महान् समझना चाहिये। उसका कारण भी मन ही कहलाता है। क्षेत्रज्ञ के अधिष्ठान से वह लिङ्गमात्र उत्पन्न हुआ। लोक के तत्त्वों के कारण धर्म आदि उसके रूप हैं। सृष्टि की इच्छा से प्रेरित होने पर महान् ही सृष्टि करता है॥ ९-१०॥

**मनो महान्मतिब्रह्मापूर्बुद्धिः ख्यातिरीश्वरः।**
**प्रज्ञा चितिः स्मृतिः संविद्धिपुरं चोच्यते बुधैः॥ ११॥**
**मनुते सर्वभूतानां यस्माच्चेष्टाफलं विभुः।**
**सूक्ष्मत्वेन विवृद्धानां तेन तन्मन उच्यते॥ १२॥**

उसी को पण्डित लोग मन, महान्, मति, ब्रह्मा,पू, बुद्धि, ख्याति, ईश्वर, प्रज्ञा, चिति, स्मृति, संविद् और विपुर कहते हैं। यह

विभु सूक्ष्मता से विबुद्ध समस्त भूतों की चेष्टा के फल का मनन कर लेता अर्थात् उनको समझ जाता है इसलिये इसको 'मन' कहते हैं॥ ११-१२॥

**तत्त्वानामग्रजोयस्मान्महांश्च परिमाणतः।**
**शेषेभ्योऽपि गुणेभ्योऽसौ महानिति ततः स्मृत॥ १३॥**

तत्त्वों में सब से प्रथम उत्पन्न होने, परिमाण में अथ च शेष गुणों से बड़ा होने के कारण इसको महान् कहते हैं॥ १३॥

**बिभर्ति मानं मनुते विभागं मन्यतेऽपि च।**
**पुरुषोपभोगसम्बन्धात्तेन चासौ मतिः स्मृतः॥ १४॥**

यह मान धारण करता है, जगत् तथा पुरुष के भोग के सम्बन्ध से विभाग को समझता है और जानता है इसलिये उसे 'मति' कहते हैं॥ १४॥

**वृहत्त्वाद् बृंहणत्वाच्च भावानां सलिलाश्रयात्।**
**यस्माद् बृंहयते भावान्ब्रह्मा तेन निरुच्यते॥ १५॥**

यह बृहत् होने के कारण सलिल के आश्रय से भावों को बढ़ाता है, इससे भावों की वृद्धि होती है। अतएव इसका नाम 'ब्रह्मा' है॥ १५॥

**आपूरयित्वा यस्माच्च कृत्स्नान् देहाननुग्रहैः।**
**तत्त्वभावांश्च नियतांस्तेन पूरिति चोच्यते॥ १६॥**

समस्त देहों तथा नियत तत्त्व भावों को अनुग्रह द्वारा पूरित करता है अतएव 'पू' कहलाता है॥ १६॥

**बुध्यते पुरुषश्चात्र सर्वभावान् हिताहितान्।**
**यस्माद् बोधयते चैव तेन बुद्धिर्निरुच्यते॥ १७॥**

इसी से पुरुष हित, अहित सारे भावों का बोध करता तथा कराता है अतएव इसकी 'बुद्धि' संज्ञा हुई॥ १७॥

**ख्यातिः प्रत्युपभोगश्च यस्मात् संवर्तते ततः।**
**भोगस्य ज्ञाननिष्ठत्वात्तेन ख्यातिरिति स्मृतः॥ १८॥**
**ख्यायते तद्गुणैर्वाऽपि नामादिभिरनेकशः।**
**तस्माच्च महतः संज्ञा ख्यातिरित्यभिधीयते॥ १९॥**

भोग के ज्ञाननिष्ठ होने के कारण इसी से ख्याति तथा प्रत्युपभोग होता है एवं अपने गुणों वाले अनेक नामों से इसकी ख्याति है अतएव महत् को 'ख्याति' कहते हैं॥ १८-१९॥

साक्षात्सर्वं विजानाति महात्मा तेन चेश्वरः।
तस्माज्ज्ञाता ग्रहाश्चैव प्रज्ञा तेन स उच्यते॥ २०॥
ज्ञानादीनि च रूपाणि क्रतुकर्मफलानि च।
चिनोति यस्माद्भोगार्थं तेनासौ चितिरुच्यते॥ २१॥
वर्तमानान्यतीतानि तथा चानागतान्यपि।
स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते॥ २२॥

ये महात्मा सबको साक्षात् जानते हैं अतएव इनका नाम 'ईश्वर' है। इसी से ग्रह भी उत्पन्न हुए इसलिये इसका नाम 'प्रज्ञा' है। ज्ञान आदि रूप तथा क्रतु, कर्मफल सब को भोग के लिये चयन करता है अतएव इसे 'चिति' कहते हैं।

वर्तमान अतीत तथा अनागत सभी कार्यों का स्मरण रखता है इसलिये इसका नाम 'स्मृति' है॥ २०-२२॥

कृत्स्नं च विन्दते ज्ञानं तस्मान्माहात्म्यमुच्यते।
तस्माद्विन्देर्विदश्चैव संविदित्यभिधीयते॥ २३॥
विद्यते स च सर्वस्मिन्सर्वं तस्मिंश्च विद्यते।
तस्मात्संविदिति प्रोक्तो महान्वैत्त बुद्धिमरैः॥ २४॥

समस्त ज्ञान को प्राप्त करता है अतएव इसकी संज्ञा 'माहात्म्य' है। विन्दन अर्थात् प्राप्त करने एवं वेदन अर्थात् ज्ञान के कारण तथा उसमें सब कुछ एवं यह सब में विद्यमान रहता है इसलिये भी विशाल बुद्धि वाले महान् को 'संविद्' कहते हैं। ज्ञाननिधि से इसे ज्ञानरूप होने के कारण 'ज्ञान' कहा है॥ २३-२४॥

ज्ञानात्तु ज्ञानमित्याह भगवाञ्ज्ञानसन्निधिः।
द्वन्द्वानां विपुरीभावाद्विपुरं प्रोच्यते बुधैः॥ २५॥
सर्वेशत्वाच्च लोकानामवश्यं च तथेश्वरः।
बृहत्वाच्च स्मृतो ब्रह्मा भूतत्वद्भव उच्यते॥ २६॥

द्वन्द्वों के विपुर (विशिष्ट स्थान) होने के कारण इसे पण्डित

गण 'विपुर' कहते हैं। लोकों का सर्वेश होने से यह अवश्य ही 'ईश्वर' है।

बृहत् होने से 'ब्रह्मा' एवं उद्भूत होने से 'भव' कहते हैं। क्षेत्र और क्षेत्रज्ञ के विज्ञान एवं एकत्व के कारण इसे 'क' कहते हैं॥ २५-२६॥

**क्षेत्रक्षेत्रज्ञविज्ञानादेकत्वाच्च स कः स्मृतः।**
**यस्मात् पुर्यनुशेते च तस्मात् पुरुष उच्यते॥ २७॥**
**नोत्पादितत्वात् पूर्वत्वात् स्वयम्भूरिति चोच्यते॥ २८॥**

पुरी में शयन करता है इसलिये 'पुरुष' कहलाता है। किसी ने इसे उत्पन्न नहीं किया तथा सबसे पहले होने के हेतु इसे स्वयम्भू कहते हैं॥ २७-२८॥

**पर्यायवाचकैः शब्दैस्तत्त्वमाद्यमनुत्तमम्।**
**व्याख्यातं तत्त्वभावज्ञैरिदं सद्भावचिन्तकैः॥ २९॥**

सद्भावों के चिन्तन करने वालों तथा तत्त्वों के भाव जानने वालों ने अनुत्तम आद्य महत् तत्त्व की इस प्रकार व्याख्या पर्यायवाची शब्दों से की है॥ २९॥

**महान् सृष्टिं विकुरुते चोद्यमानः सिसृक्षया।**
**सङ्कल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम्॥ ३०॥**

सर्ग की इच्छा से प्रेरित होने पर महान् सृष्टि करता है। संकल्प तथा अध्यवसाय इसकी दो वृत्तियाँ हैं॥ ३०॥

**धर्मादीनि च रूपाणि लोकतत्त्वार्थहेतवः।**
**त्रिगुणस्तु स विज्ञेयः सत्त्वराजसतामसः॥ ३१॥**

***वायुपुराणे चतुर्थाध्याये वर्णितो ब्रह्मतत्त्वविमर्शः समाप्तः॥***

लोकों के तत्त्व पदार्थ के ज्ञान हेतु धर्म आदि इसके रूप हैं तथा यह सात्त्विक, राजस एवं तामस रूप से त्रिगुण है— ऐसा जानना चाहिये॥ ३१॥

*वायुपुराण के चतुर्थ अध्याय में वर्णित*
*ब्रह्मतत्त्वविमर्श समाप्त हुआ॥*



# ब्रह्मणः सभा

नारद०

पितामह-सभां तात कथ्यमानां निबोध मे।
शक्यते या न निर्देष्टुमेवंरूपेति भारत॥ १॥

नारद जी— तात भारत! अब तुम मेरे मुख से कही हुई पितामह ब्रह्माजी की सभा का वर्णन सुनो! वह सभा ऐसी है, इस रूप से नहीं बतायी जा सकती॥ १॥

पुरा देवयुगे राजन्नादित्यो भगवान् दिवः।
आगच्छन्मानुषं लोकं दिदृक्षुर्विगतक्लमः॥ २॥
चरन् मानुषरूपेण सभां दृष्ट्वा स्वयम्भुवः।
स तामकथयन्मह्यं ब्राह्मीं तत्त्वेन पाण्डव॥ ३॥

राजन्! पहले सत्ययुग की बात है, भगवान् सूर्य ब्रह्माजी की सभा देखकर फिर मनुष्यलोक को देखने के लिये बिना परिश्रम के ही द्युलोक से उतरकर इस लोक में आये और मनुष्यरूप से इधर-उधर विचरने लगे। पाण्डुनन्दन! सूर्यदेव ने मुझसे उस ब्राह्मी सभा का यथार्थतः वर्णन किया॥ २-३॥

अप्रमेयां सभां दिव्यां मानसीं भरतर्षभ!
अनिर्देश्यां प्रभावेण सर्वभूतमनोरमाम्॥ ४॥

भरतश्रेष्ठ! वह सभा अप्रमेय, दिव्य, ब्रह्माजी के मानसिक सङ्कल्प से प्रकट हुई तथा समस्त प्राणियों के मन को मोह लेने वाली है। उसका प्रभाव अवर्णनीय है॥ ४॥

श्रुत्वा गुणानहं तस्याः सभायाः पाण्डवर्षभ!
दर्शनेप्सुस्तथा राजन्नादित्यमिदमब्रुवम्॥ ५॥

पाण्डुकुलभूषण युधिष्ठिर! उस सभा के अलौकिक गुण सुनकर मेरे मन में उसके दर्शन की इच्छा जाग उठी और मैंने सूर्यदेव से कहा— ॥ ५॥

**भगवन् द्रष्टुमिच्छामि पितामहसभां शुभाम्।**
**येन वा तपसा शक्या कर्मणा वापि गोपते॥ ६॥**
**औषधैर्वा तथा युक्तैरुत्तमा पापनाशिनी।**
**तन्ममाचक्ष्व भगवन् पश्येयं तां सभां यथा॥ ७॥**

'भगवन्! मैं भी ब्रह्माजी की कल्याणमयी सभा का दर्शन करना चाहता हूँ। किरणों के स्वामी सूर्यदेव! जिस तपस्या से, सत्कर्म से अथवा उपयुक्त ओषधियों के प्रभाव से उस पापनाशिनी उत्तम सभा का दर्शन हो सके, वह मुझे बताइये। भगवन्! मैं जैसे भी उस सभा को देख सकूँ, उस उपाय का वर्णन कीजिये'॥ ६-७॥

**स तन्मम वचः श्रुत्वा सहस्रांशुर्दिवाकरः।**
**प्रोवाच भरतश्रेष्ठ व्रतं वर्षसहस्रिकम्॥ ८॥**
**ब्रह्मव्रतमुपास्स्व त्वं प्रयतेनान्तरात्मना।**
**ततोऽहं हिमवत्पृष्ठे समारेभे महाव्रतम्॥ ९॥**

भरतश्रेष्ठ! मेरी वह बात सुनकर सहस्रों किरणों वाले भगवान् दिवाकर ने कहा— ''तुम एकाग्रचित्त होकर ब्रह्माजी के व्रत का पालन करो। वह श्रेष्ठ व्रत एक हजार वर्षों में पूर्ण होगा।'' तब मैंने हिमालय के शिखर पर आकर उस महान् व्रत का अनुष्ठान आरम्भ कर दिया॥ ८-९॥

**ततः स भगवान् सूर्यो मामुपादाय वीर्यवान्।**
**आगच्छत् तां सभां ब्राह्मीं विपाप्मा विगतक्लमः॥ १०॥**

तदनन्तर मेरी तपस्या पूर्ण होने पर पापरहित, क्लेशशून्य अ. परम शक्तिशाली भगवान् सूर्य मुझे साथ ले ब्रह्माजी की उस सभा में गये॥ १०॥

**एवंरूपेति सा शक्या न निर्देष्टुं नराधिप!**
**क्षणेन हि बिभर्त्यन्यदनिर्देश्यं वपुस्तथा॥ ११॥**

राजन्! वह सभा 'ऐसी ही है' इस प्रकार नहीं बतायी जा सकती; क्योंकि वह एक एक क्षण में दूसरा अनिर्वचनीय स्वरूप धारण कर लेती है॥ ११॥

**न वेद परिमाणं वा संस्थानं चापि भारत!**
**न च रूपं मया तादृग् दृष्टपूर्वं कदाचन॥ १२॥**

भारत! उसकी लम्बाई–चौड़ाई कितनी है अथवा उसकी स्थिति क्या है, यह सब मैं कुछ नहीं जानता। मैंने किसी भी सभा का वैसा स्वरूप पहले कभी नहीं देखा था॥ १२॥

**सुसुखा सा सदा राजन् न शीता न च घर्मदा।**
**न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत॥ १३॥**

राजन्! वह सदा उत्तम सुख देने वाली है। वहाँ न सर्दी का अनुभव होता है, न गर्मी का। उस सभा में पहुँच जाने पर लोगों को भूख, प्यास और ग्लानि का अनुभव नहीं होता॥ १३॥

**नानारूपैरिव कृता मणिभिः सा सुभास्वरैः।**
**स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा॥ १४॥**

वह सभा अनेक प्रकार की अत्यन्त प्रकाशमान मणियों से निर्मित हुई है। वह स्तम्भों के आधार पर नहीं टिकी है और उसमें कभी क्षयरूप विकार न आने के कारण वह नित्य मानी गयी है॥१४॥

**दिव्यैर्नानाविधैर्भावैर्भासद्भिरमितप्रभैः ॥ १५॥**
**अग्निचन्द्रं च सूर्यं च शिखिनं च स्वयम्प्रभा।**
**दीप्यते नाकपृष्ठस्था भासयन्तीव भास्करम्॥ १६॥**

अनन्त प्रभावाले नाना प्रकार के प्रकाशमान दिव्य पदार्थों द्वारा अग्नि, चन्द्रमा और सूर्य से भी अधिक स्वयं ही प्रकाशित होने वाली वह सभा अपने तेज से सूर्यमण्डल को तिरस्कृत करती हुई–सी स्वर्ग से भी ऊपर स्थित हुई प्रकाशित हो रही है॥ १५–१६॥

**तस्यां स भगवानास्ते विदधद् देवमायया।**
**स्वयमेकोऽनिशं राजन् सर्वलोकपितामहः॥ १७॥**

राजन्! उस सभा में सम्पूर्ण लोकों के पितामह ब्रह्माजी देवमाया द्वारा समस्त जगत् की स्वयं अकेले ही सृष्टि करते हुए सदा विराजमान होते हैं॥ १७॥

**उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम्।**
**दक्षः प्रचेताः पुलहो मरीचिः कश्यपः प्रभुः॥ १८॥**
**भृगुरत्रिर्वसिष्ठश्च गौतमोऽथ तथाङ्गिराः।**
**पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्दमस्तथा॥ १९॥**

भारत! वहाँ दक्ष आदि प्रजापतिगण उन भगवान् ब्रह्माजी की सेवा में उपस्थित होते हैं। दक्ष, प्रचेता, पुलह, मरीचि, प्रभावशाली कश्यप, भृगु, अत्रि, वसिष्ठ, गौतम, अङ्गिरा, पुलस्त्य, क्रतु, प्रह्लाद, कर्दम॥ १८-१९॥

**अथर्वाङ्गिरसश्चैव बालखिल्याः मरीचिपाः।**
**मनोऽन्तरिक्षं विद्याश्च वायुस्तेजो जलं मही॥ २०॥**
**शब्दस्पर्शौ तथा रूपं रसो गन्धश्च भारत!**
**प्रकृतिश्च विकारश्च यच्चान्यत् कारणं भुवः॥ २१॥**

अथर्वाङ्गिरस, सूर्यकिरणों का पान करनेवाले बालखिल्य, मन, अन्तरिक्ष, विद्या, वायु, तेज, जल, पृथ्वी, शब्द, स्पर्श, रूप, रस, गन्ध, प्रकृति, विकृति तथा पृथ्वी की रचना के जो अन्य कारण हैं, इन सबके अभिमानी देवता उपस्थित रहते हैं॥ २०-२१॥

**अगस्त्यश्च महातेजा मार्कण्डेयश्च वीर्यवान्।**
**जमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा॥ २२॥**
**दुर्वासाश्च महाभाग ऋष्यशृङ्गश्च धार्मिकः।**
**सनत्कुमारो भगवान् योगाचार्यो महातपाः॥ २३॥**

महातेजस्वी अगस्त्य, शक्तिशाली मार्कण्डेय, जमदग्नि, भरद्वाज, संवर्त, च्यवन, महाभाग दुर्वासा, धर्मात्मा ऋष्यशृङ्ग, महातपस्वी, योगाचार्य भगवान् सनत्कुमार विराजमान रहते हैं॥ २२-२३॥

**असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित्।**
**ऋषभो जितशत्रुश्च महावीर्यस्तथा मणिः॥ २४॥**
**आयुर्वेदस्तथाष्टाङ्गो देहवांस्तत्र भारत!**
**चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान्॥ २५॥**

असित, देवल, तत्त्वज्ञानी जैगीषव्य, शत्रुविजयी ऋषभ, महापराक्रमी मणि।

तथा आठ अङ्गों से युक्त मूर्तिमान् आयुर्वेद, नक्षत्रोंसहित चन्द्रमा, अंशुमाली सूर्य वहाँ शोभायमान होते हैं॥ २४-२५॥

**वायवः क्रतवश्चैव संकल्पः प्राण एव च।**
**मूर्तिमन्तो महात्मानो महाव्रतपरायणाः॥ २६॥**

**एते चान्ये च बहवो ब्रह्माणं समुपस्थिताः।**
**अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः॥ २७॥**

वायु, क्रतु, सङ्कल्प और प्राण— ये तथा और भी बहुत से मूर्तिमान् महान् व्रतधारी महात्मा ब्रह्माजी की सेवा में उपस्थित रहते हैं।

अर्थ, धर्म, काम, हर्ष, द्वेष, तप और दम— ये भी मूर्तिमान् होकर ब्रह्माजी की उपासना करते हैं॥ २६-२७॥

**आयन्ति तस्यां सहिता गन्धर्वाप्सरसां गणाः।**
**विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः॥ २८॥**
**शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च।**
**शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च॥ २९॥**

गन्धर्वों और अप्सराओं के बीस गण एक साथ उस सभा में आते हैं। सात अन्य गन्धर्व भी जो प्रधान हैं, समस्त लोकपाल, शुक्र, बृहस्पति, बुध, मङ्गल, शनैश्चर, राहु तथा केतु— ये सभी ग्रह वहाँ उपस्थित होते हैं॥ २८-२९॥

**मन्त्रो रथन्तरं चैव हरिमान् वसुमानपि।**
**आदित्याः साधिराजानो नामद्वन्द्वैरुदाहृताः॥ ३०॥**
**मरुतो विश्वकर्मा च वसवश्चैव भारत!**
**तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ॥ ३१॥**

सामगानसम्बन्धी मन्त्र, रथन्तरसाम, हरिमान्, वसुमान्, अपने स्वामी इन्द्रसहित बारह आदित्य, अग्नि-सोम आदि युगल नामों से कहे जाने वाले देवता। मरुद्गण, विश्वकर्मा, वसुगण, समस्त पितृगण, सभी हविष्य वहाँ विराजमान रहते हैं॥ ३०-३१॥

**ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव।**
**अथर्ववेदश्च तथा सर्वशास्त्राणि चैव ह॥ ३२॥**
**इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः।**
**ग्रहा यज्ञाश्च सोमश्च देवताश्चापि सर्वशः॥ ३३॥**

पाण्डुनन्दन! ऋग्वेद, सामवेद, यजुर्वेद, अथर्ववेद तथा सम्पूर्ण शास्त्र।

इतिहास, उपवेद[1], सम्पूर्ण वेदाङ्ग, ग्रह, यज्ञ, सोम और समस्त देवता सशरीर वहाँ उपस्थित रहते हैं॥ ३२-३३॥

**सावित्री दुर्गतरणी वाणी सप्तविधा तथा।**
**मेधा धृतिः श्रुतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा॥ ३४॥**
**सामानि स्तुतिगीतानि गाथाश्च विविधास्तथा।**
**भाष्याणि तर्कयुक्तानि देहवन्ति विशाम्पते॥ ३५॥**
**नाटका विविधाः काव्यकथाख्यायिककारिकाः।**
**तत्र तिष्ठन्ति ते पुण्या ये चान्ये गुरुपूजकाः॥ ३६॥**

सावित्री, दुर्गम दुःख से उबारनेवाली दुर्गा, सात प्रकार[2] की प्रणवरूपा वाणी, मेधा, धृति, श्रुति, प्रज्ञा, बुद्धि, यश और क्षमा, साम, स्तुतिगीत, विविध गाथा तथा तर्कयुक्त भाष्य— ये सभी देहधारी होकर एवं अनेक प्रकार के नाटक, काव्य, कथा, आख्यायिका तथा कारिका आदि उस सभा में मूर्तिमान् होकर रहते हैं। इसी प्रकार गुरुजनों की पूजा करनेवाले जो दूसरे पुण्यात्मा पुरुष हैं, वे सभी उस सभा में स्थित होते हैं॥ ३४-३६॥

**क्षणा लवा मुहूर्ताश्च दिवारात्रिस्तथैव च।**
**अर्धमासाश्च मासाश्च ऋतवः षट् च भारत॥ ३७॥**
**संवत्सराः पञ्च युगमहोरात्रश्चतुर्विधः।**
**कालचक्रं च तद् दिव्यं नित्यमक्षयमव्ययम्।**
**धर्मचक्रं तथा चापि नित्यमास्ते युधिष्ठिर॥ ३८॥**

युधिष्ठिर! क्षण, लव, मुहूर्त, दिन, रात, पक्ष, मास, छहों ऋतुएँ, साठ संवत्सर, पाँच संवत्सरों का युग, चार प्रकार के दिन-रात (मानव, पितर, देवता और ब्रह्माजी के दिन-रात), नित्य, दिव्य, अक्षय एवं अव्यय कालचक्र तथा धर्मचक्र भी देहधारण करके सदा ब्रह्माजी की सभा में उपस्थित रहते हैं॥ ३७-३८॥

---

*१. आयुर्वेद, धनुर्वेद, गान्धर्ववेद और अर्थशास्त्र— ये चार उपवेद माने गये हैं।*

*२. अकार, उकार, मकार, अर्धमात्रा, नाद, बिन्दु और शक्ति— ये प्रणव के सात प्रकार हैं। अथवा संस्कृत, प्राकृत, पैशाची, अपभ्रंश, ललित, मागध और गद्य— ये वाणी के सात प्रकार जानने चाहिये।*

**अदितिर्दितिर्दनुश्चैव सुरसा विनता इरा।**
**कालिका सुरभीदेवी सरमा चाथ गौतमी॥ ३९॥**
**प्रभा कद्रूश्च वै देव्यौ देवतानां च मातरः।**
**रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथापरा॥ ४०॥**
**पृथ्वी गां गता देवी ह्रीः स्वाहा कीर्तिरेव च।**
**सुरादेवी शची चैव तथा पुष्टिररुन्धती॥ ४१॥**
**संवृत्तिराशा नियतिः सृष्टिर्देवी रतिस्तथा।**
**एताश्चान्याश्च वै देव्यः उपतस्थुः प्रजापतिम्॥ ४२॥**

अदिति, दिति, दनु, सुरसा, विनता, इरा, कालिका, सुरभी देवी, सरमा, गौतमी, प्रभा और कद्रू— ये दो देवियाँ, देवमाताएँ, रुद्राणी, श्री, लक्ष्मी, भद्रा, षष्ठी तथा अपरा, पृथ्वी, भूतल पर उतरी हुई गङ्गादेवी, लज्जा, स्वाहा, कीर्ति, सुरादेवी, शची, पुष्टि, अरुन्धती, संवृत्ति, आशा, नियति, सृष्टिदेवी, रति तथा अन्य देवियाँ भी उस सभा में प्रजापति ब्रह्माजी की उपासना करती हैं॥ ३९-४२॥

**आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि।**
**विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः॥ ४३॥**

आदित्य, वसु, रुद्र, मरुद्गण, अश्विनीकुमार, विश्वेदेव, साध्य तथा मन के समान वेगशाली पितर भी उस सभा में उपस्थित होते हैं॥ ४३॥

**पितॄणां च गणान् विद्धि सप्तैव पुरुषर्षभ!**
**मूर्तिमन्तो हि चत्वारस्त्रयश्चाप्यशरीरिणः॥ ४४॥**

नरश्रेष्ठ! तुम्हें मालूम होना चाहिये कि पितरों के सात ही गण होते हैं, जिनमें चार तो मूर्तिमान् हैं और तीन अमूर्त॥ ४४॥

**वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत!**
**गार्हपत्या नाकचराः पितरो लोकविश्रुताः॥ ४५॥**
**सोमपा एकशृङ्गाश्च चतुर्वेदाः कलास्तथा।**
**एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप॥ ४६॥**

भारत! सम्पूर्ण लोकों में विख्यात स्वर्गलोक में विचरनेवाले महाभाग वैराज, अग्निष्वात्त, सोमपा, गार्हपत्य (ये चार मूर्त हैं),

एकशृङ्ग, चतुर्वेद तथा कला (ये तीन अमूर्त हैं)। ये सातों पितर क्रमशः चारों वर्णों में पूजित होते हैं॥ ४४-४६॥

**एतैराप्यायितैः पूर्वं सोमश्चाप्याय्यते पुनः।**
**त एते पितरः सर्वे प्रजापतिमुपस्थिताः।**
**उपासते च संहृष्टा ब्रह्माणममितौजसम्॥ ४७॥**

राजन्! पहले इन पितरों के तृप्त होने से सोम देवता भी तृप्त हो जाते हैं। ये सभी पितर उक्त सभा में उपस्थित हो प्रसन्नतापूर्वक अमित तेजस्वी प्रजापति ब्रह्माजी की उपासना करते हैं॥ ४७॥

**राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा।**
**नागा सुपर्णाः पशवः पितामहमुपासते॥ ४८॥**
**स्थावरा जङ्गमाश्चैव महाभूतास्तथापरे।**
**पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः॥**
**महादेवः सहोमोऽत्र सदा गच्छति सर्वशः॥ ४९॥**

इसी प्रकार राक्षस, पिशाच, दानव, गुह्यक, नाग, सुपर्ण तथा श्रेष्ठ पशु भी वहाँ पितामह ब्रह्माजी की उपासना करते हैं। स्थावर और जङ्गम महाभूत, देवराज इन्द्र, वरुण, कुबेर, यम तथा पार्वतीसहित महादेवजी— ये सब सदा उस सभा में पधारते हैं॥ ४८-४९॥

**महासेनश्च राजेन्द्र सदोपास्ते पितामहम्।**
**देवो नारायणस्तस्यां तथा देवर्षयश्च ये॥**
**ऋषयो बालखिल्याश्च योनिजायोनिजास्तथा॥ ५०॥**

राजेन्द्र! स्वामी कार्तिकेय भी वहाँ उपस्थित होकर सदा ब्रह्मा जी की सेवा करते हैं। भगवान् नारायण, देवर्षिगण, बालखिल्य ऋषि तथा दूसरे अयोनिज और योनिज ऋषि उस सभा में ब्रह्मा जी की आराधना करते हैं॥ ५०॥

**यच्च किञ्चित् त्रिलोकेऽस्मिन् दृश्यते स्थाणु जङ्गमम्।**
**सर्वं तस्यां मया दृष्टमिति विद्धि नराधिप॥ ५१॥**

नरेश्वर! संक्षेप में यह समझ लो कि तीनों लोकों में स्थावर-जङ्गम भूतों के रूप में जो कुछ भी दिखायी देता है, वह सब मैंने उस सभा में देखा था॥ ५१॥

**अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम्।**
**प्रजावतां च पञ्चाशदृषीणामपि पाण्डव॥ ५२॥**

पाण्डुनन्दन! अट्ठासी हजार ऊर्ध्वरेता ऋषि और पचास सन्तानवान् महर्षि उस सभा में उपस्थित होते हैं॥ ५२॥

**ते स्म तत्र यथाकामं दृष्ट्वा सर्वे दिवौकसः।**
**प्रणम्य शिरसा तस्मै सर्वे यान्ति यथाऽऽगतम्॥ ५३॥**

वे सब महर्षि तथा सम्पूर्ण देवता वहाँ इच्छानुसार ब्रह्माजी का दर्शन कर उन्हें मस्तक झुकाकर, प्रणाम करते और आज्ञा लेकर जैसे आये होते हैं, वैसे ही चले जाते हैं॥ ५३॥

**अतिथीनागतान् देवान् दैत्यान् नागाँस्तथा द्विजान्।**
**यक्षान् सुपर्णान् कालेयान् गन्धर्वाप्सरसस्तथा॥ ५४॥**
**महाभागानमितधीर्ब्रह्मा लोकपितामहः।**
**दयावान् सर्वभूतेषु यथार्हं प्रतिपद्यते॥ ५५॥**

अगाध बुद्धिवाले, दयालु लोकपितामह ब्रह्माजी अपने यहाँ आये हुए सभी महाभाग अतिथियों— देवता, दैत्य, नाग, पक्षी, यक्ष, सुपर्ण, कालेय, गन्धर्व तथा अप्सराओं एवं सम्पूर्ण भूतों से यथायोग्य मिलते हैं और उन्हें अनुगृहीत करते हैं॥ ५४-५५॥

**प्रतिगृह्य तु विश्वात्मा स्वयम्भूरमितद्युतिः।**
**सान्त्वमानार्थसम्भोगैर्युनक्ति मनुजाधिप॥ ५६॥**

मनुजेश्वर! अमित तेजस्वी विश्वात्मा स्वयम्भू उन सब अतिथियों को अपनाकर उन्हें सान्त्वना देते, उनका सम्मान करते, उनके प्रयोजन की पूर्ति करके उन सब को आवश्यकता तथा रुचि के अनुसार भोगसामग्री प्रदान करते हैं॥ ५६॥

**तथा तैरुपयातैश्च प्रतियद्भिश्च भारत!**
**आकुला सा सभा तात भवति स्म सुखप्रदा॥ ५७॥**

तात भारत! इस प्रकार वहाँ आने-जाने वाले लोगों से भरी हुई वह सभा बड़ी सुखदायिनी जान पड़ती है॥ ५७॥

**सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता।**
**ब्राह्मया श्रिया दीप्यमाना शुशुभे विगतक्लमा॥ ५८॥**

नृपश्रेष्ठ ! वह सभा सम्पूर्ण तेज से सम्पन्न, दिव्य तथा ब्रह्मर्षियों के समुदाय से सेवित और पापरहित एवं ब्राह्मी श्री से उद्भासित और सुशोभित होती रहती है॥ ५८॥

**सा सभा तादृशी दृष्टा मया लोकेषु दुर्लभा।**
**सभेयं राजशार्दूल मनुष्येषु यथा तव॥ ५९॥**

ऐसी उस सभा का मैंने दर्शन किया है। जैसे मनुष्यलोक में तुम्हारी यह सभा दुर्लभ है, वैसे ही सम्पूर्ण लोकों में ब्रह्माजी की सभा भी परम दुर्लभ है॥ ५९॥

*श्रीमहाभारते सभापर्वणि लोकपालसभाख्यानपर्वणि*
*ब्रह्मसभावर्णनं नामैकादशोऽध्यायः सम्पूर्णः॥ ११॥*

*इस प्रकार श्रीमहाभारत सभापर्व के अन्तर्गत लोकपालसभाख्यानपर्व में ब्रह्मसभावर्णन नामकग्यारहवाँ अध्याय पूर्ण हुआ॥ ११॥*



देवी०

**एवं माहात्म्यसंयुक्तो यदि ब्रह्मा जगद्गुरुः।**
**प्राभासिके महातीर्थे कस्मिन् स्थाने तु संस्थितः ॥ १२ ॥**

**देवी—** यदि जगद्गुरु ब्रह्मा ऐसे माहात्म्य वाले हैं तो वे इस प्रभासतीर्थ में किस स्थान पर वास करते हैं ? ॥ १२ ॥

**किमर्थमागतस्तत्र कस्मिन् काले सुरोत्तमः।**
**कथं स पूज्यो विप्रेन्द्रैस्तिथौ कस्यां क्रमाद्वद ॥ १३ ॥**

वे सुरश्रेष्ठ इस तीर्थ में, प्रारम्भ में, किस हेतु से आये ? किस समय आये ? वे यहाँ श्रेष्ठ ब्राह्मणों द्वारा कब से तथा किस तिथि से पूजे जाने लगे ? ये सभी बातें मुझे क्रमशः समझाइये ॥ १३ ॥

ईश्वर०

**सोमनाथस्य ऐशान्यां सांबादित्याग्निगोचरे।**
**ब्रह्मणः परमं स्थानं ब्रह्मलोक इवापरः ॥ १४ ॥**

**ईश्वर—**सोमनाथ के ईशान कोण में तथा सांबादित्य के अग्निकोण में ब्रह्मा का वह उत्तम स्थान है. जहाँ आकर उन्होंने सर्वप्रथम वास किया था। उस स्थान को तुम दूसरा ब्रह्मलोक ही समझो ॥ १४ ॥

**तिष्ठते कल्पसंस्था ये तत्र कल्पान्तवासिनः।**
**तत्र स्थाने स्थितो देवि बालरूपी पितामहः ॥ १५ ॥**

वहाँ कल्पवासी भक्तजन कल्पपर्यन्त ठहरते हैं। हे देवि! बालरूप पितामह सर्वप्रथम उसी स्थान पर आकर वास करने लगे थे ॥ १५ ॥

**जगत्प्रभुर्लोककर्ता सत्त्वमूर्तिर्महाप्रभः।**
**आगतश्चाष्टवर्षस्तु क्षेत्रे प्राभासिके शुभे ॥ १६ ॥**

वह जगत्वामी, विश्वरचयिता, सत्त्वमूर्ति, महान् प्रभावाले ब्रह्मा आठ वर्ष की आयु में इस पवित्र प्रभास क्षेत्र में पधारे थे ॥ १६ ॥

**तत्राऽकरोत्तपो घोरं दिव्याब्दानां सहस्रकम्।**
**संस्थाप्य तु महालिङ्गं सिसृक्षुर्विविधाः प्रजाः ॥ १७ ॥**

यहाँ आकर उन्होंने हजार दिव्य वर्षों तक महालिङ्ग की स्थापना कर कठोर तप किया जिससे कि वे विश्वरचना की सामर्थ्य प्राप्त कर सकें॥ १७॥

**ततः कालान्तरेऽतीते सोमेन प्रार्थितो विभुः।**
**क्षयरोगविमुक्तेन सम्यक्छ्रद्धान्वितेन वै॥ १८॥**
**लिङ्गप्रतिष्ठाहेतोर्वै क्षेत्रे प्राभासिके शुभे।**
**कोटिब्रह्मर्षिभिः सार्द्धं सहितो विश्वकर्मणा॥**
**कारयामास विधिवत्प्रतिष्ठां लिङ्गमुत्तमम्॥ १९॥**

फिर समय बीतने पर, कभी क्षयरोग से विमुक्त होकर श्रद्धाभावाभिभूत चन्द्रमा ने उस ब्रह्मा जी से पूजा हेतु लिङ्ग प्रतिष्ठा के लिये निवेदन किया। तब ब्रह्मा जी ने इसी प्रभासतीर्थ में करोड़ों ब्रह्मर्षियों के सान्निध्य में विश्वकर्मा के साथ मिलकर, शास्त्रविधि के अनुसार उत्तम शिवलिङ्ग की स्थापना की॥ १८-१९॥

**प्रतिष्ठाप्य ततो लिङ्गं सोमनाथं वरानने।**
**दापयामास विप्रेभ्यो भूरिशो यज्ञदक्षिणाम्॥ २०॥**

हे श्रेष्ठमुखि! इस तरह सोमनाथ के उत्तम लिङ्ग की स्थापना कर, ब्रह्मा जी ने चन्द्रमा से ब्राह्मणों को अधिक से अधिक यज्ञ-दक्षिणा दिलायी॥ २०॥

**एवं प्रतिष्ठितं लिङ्गं ब्रह्मणा लोककर्त्तृणा।**
**वर्षाणि चात्र जातानि प्रभासे बालरूपिणः॥ २१॥**
**द्विचत्वारिंशद्वयं चैव क्षेत्रमध्यनिवासिनः।**
**एवं परार्द्धमगमत्प्रभासक्षेत्रवासिनः॥ २२॥**

इस तरह विश्वस्रष्टा उन बालरूपी ब्रह्मा के द्वारा वह लिङ्ग प्रतिष्ठित हुआ और इस प्रभासक्षेत्र में वास करते हुए उन ब्रह्मा के ४२ वर्ष बीते। इसी के साथ, प्रभासक्षेत्र में वास करते करते उनकी आयु का परार्धकाल भी व्यतीत हो गया॥ २१-२२॥

**देवी०**

**ब्रह्मणो दिनमानं तु मासवर्षसहस्रकम्।**
**तत्सर्वं विस्तराद् ब्रूहि यथायुर्ब्रह्मणः स्मृतम्॥ २३॥**

**देवी**— हे भगवन्! ब्रह्म जी का दिनमान कितने हजार मास एवं वर्षों के सङ्कलन से कितना होता है ?— कृपया यह सब विस्तार से बताइये, जिससे मैं उनकी आयु का ठीक ठीक ज्ञान प्राप्त कर सकूँ ॥ २३ ॥

**ईश्वर०**

**परमायुः स्मृतो ब्रह्मा पराार्द्धं तस्य वै गतम्।**
**प्रभासक्षेत्रसंस्थस्य द्वितीयं भवतेऽधुना ॥ २४ ॥**

**ईश्वर**— ब्रह्मा की जितनी आयु बतायी गयी है उसका परार्ध बीत चुका है। उनके प्रभासक्षेत्र में रहते हुए, उनकी आयु का दूसरा परार्ध चल रहा है ॥ २४ ॥

**यदा प्राभासिके क्षेत्रे ब्रह्मा लोकपितामहः।**
**आगतश्चाष्टवर्षस्तु बालरूपी तदोच्यते ॥ २५ ॥**

जब ये लोक पितामह ब्रह्मा जी प्रारम्भ में इस प्रभास क्षेत्र में आये थे तो ये आठ वर्ष के थे। उस समय ये 'बालरूपी ब्रह्मा' कहलाते थे ॥ २५ ॥

**अन्येषु सर्वतीर्थेषु वृद्धरूपी पितामहः।**
**मुक्त्वा प्राभासिकं क्षेत्रं सदैव विबुधप्रिये ॥ २६ ॥**

हे विबुधप्रिये! प्रभासक्षेत्र को छोड़कर ब्रह्मा जी अन्य सब तीर्थों में 'वृद्ध पितामह' कहलाते हैं ॥ २६ ॥

**ब्रह्माण्डे यानि तीर्थानि ब्रह्मणस्तेषु ये स्मृताः।**
**तेषामाद्यो महातेजाः प्रभासे यो व्यवस्थितः ॥ २७ ॥**

इस समस्त ब्रह्माण्ड में जितने भी तीर्थ हैं, उनमें जितने भी ब्रह्मा हैं उनमें प्रधान ये महान् तेजस्वी प्रभासतीर्थ के बालरूपी ब्रह्मा ही हैं ॥ २७ ॥

**कल्पे कल्पे तु नामानि शृणु त्वं तानि वै प्रिये।**
**स्वयम्भूः प्रथमे कल्पे द्वितीये पद्मभूः स्थितः ॥ २८ ॥**

हे प्रिये! प्रत्येक कल्प में जो ब्रह्मा हुए हैं उनका नाम क्रमशः सुनो।

प्रथम कल्प के ब्रह्मा का नाम था 'स्वयम्भू', दूसरे कल्प के ब्रह्मा का नाम था 'पद्मभू' ॥ २८ ॥

**तृतीये विश्वकर्तेति बालरूपी चतुर्थके।**
**एतानि मुख्यनामानि कथितानि स्वयम्भुवः ॥ २९ ॥**

तृतीय कल्प के ब्रह्मा का नाम था 'विश्वकर्ता'। चतुर्थ कल्प के ब्रह्मा का नाम था 'बालरूपी'।

स्वयम्भू ब्रह्मा के ये ही मुख्य नाम कहे गये हैं ॥ २९ ॥

**नित्यं संस्मरते यस्तु स दीर्घायुर्नरो भवेत्॥ ३० ॥**

इनका नित्य स्मरण करने वाला पुरुष दीर्घायु होता है ॥ ३० ॥

**चन्द्रसूर्यग्रहाः सर्वे सदेवासुरमानुषाः।**
**त्रैलोक्यं नश्यते सर्वं ब्रह्मरात्रिसमागमे ॥ ३१ ॥**

**प्रलयकाल**— ब्रह्मरात्रि के आने पर, देवताओं मनुष्यों एवं असुरों सहित सभी चन्द्र, सूर्य आदि ग्रह तथा यह समग्र त्रिलोकी— सब कुछ नष्ट हो जाता है ॥ ३१ ॥

**पुनर्दिने तु सञ्जाते प्रबुद्धः सन् पितामहः।**
**तथा सृष्टिं प्रकुरुते यथापूर्वमभूत्प्रिये॥ ३२ ॥**

**पुनः सृष्टि**— फिर ब्रह्मा का दिन आने पर, हे प्रिये! पितामह ब्रह्मा प्रबुद्ध हो पूर्ववत् सृष्टि प्रारम्भ करते हैं ॥ ३२ ॥

**दिनमानं प्रवक्ष्यामि ब्रह्मणो लोककर्तृणः।**
**नेत्रभागाच्चतुर्भागस्त्रुटिः कालो निगद्यते॥ ३३ ॥**

**ब्रह्मा का दिनमान**— लोककर्ता ब्रह्मा के दिनमान के विषय में मैं तुम्हें विस्तार से बताता हूँ— नेत्रभाग का चतुर्थ अंश जितना समय 'त्रुटि' कहलाता है ॥ ३३ ॥

**तस्माच्च द्विगुणं ज्ञेयं निमिषान्तं वरानने!**
**निमिषैः पञ्चदशभिः काष्ठा इत्युच्यते बुधैः।**
**त्रिंशद्भिश्चैव काष्ठाभिः कला प्रोक्ता मनीषिभिः ॥ ३४ ॥**

हे सुमुखि! उससे द्विगुण भाग 'निमिष' कहलाता है। विद्वान् लोग इन पन्द्रह (१५) निमिषों का समग्र भाग एक 'काष्ठा' कहते है। बुद्धिमान् लोग तीस (३०) काष्ठाओं को एक 'कला' कहते हैं ॥ ३४ ॥

**त्रिंशत्कलो मुहूर्तः स्याद् दिनं पञ्चशैस्तु तैः।**
**दिनमाना निशा ज्ञेया अहोरात्रं तयो र्भवेत्॥ ३५॥**

तीस कलाओं का एक 'मुहूर्त' कहलाता है। एक दिन में पन्द्रह (१५) मुहूर्त होते हैं। एक दिन के समान काल को 'निशा' (रात्रि) कहते हैं। इन दोनों (दिन और रात्रि) को मिलाकर 'अहोरात्र' कहलाता है॥ ३५॥

**तैः पञ्चदशभिः पक्षः पक्षाभ्यां मास उच्यते।**
**मासैश्चैवायनं षड्भिरब्दं स्यादयनद्वयात्॥ ३६॥**

इन पन्द्रह अहोरात्रों का एक 'पक्ष' कहलाता है। दो पक्षों का एक 'मास' कहलाता है। इन छह मासों का एक 'अयन' (सूर्य की गति) कहलाता है। दो अयन का एक 'अब्द' (वर्ष) कहलाता है॥ ३६॥

**चत्वारिंशद्धि लक्षाणि लक्षाणा त्रितयं पुनः।**
**विंशतिश्च सहस्राणि ज्ञेयं सौरं चतुर्युगम्॥ ३७॥**

चालीस लाख, तीन लाख एवं बीस हजार (४३२००००)—सौर वर्षों का 'चतुर्युग' कहलाता है॥ ३७॥

**चतुर्युगैकसप्तत्या मन्वन्तरमुदाहृतम्।**
**ऐन्द्रमेतद्भवेदायुः समासात्तव कीर्तितम्॥ ३८॥**

इकहत्तर चतुर्युगों का एक 'मन्वन्तर' कहलाता है। यह इतना काल एक इन्द्र की आयु कहलाता है, जो कि मैंने तुमको संक्षेप से बता दिया॥ ३८॥

**स्वायम्भुवो मनुः पूर्वं मनुः स्वारोचिषस्ततः॥**
**औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्ततः॥ ३९॥**

**चौदह मनु—** पहले मनु का नाम 'स्वायम्भुव मनु' था, दूसरे का नाम था 'स्वारोचिष'। तदनन्तर, ३ औत्तम, ४. तामस, ५. रैवत, ६. चाक्षुष नाम के मनु हुए॥ ३९॥

**वैवस्वतोऽथ सावर्णिर्ब्रह्मसावर्णिरेव च।**
**धर्मसावर्णिनामा च रोच्यो भूत्यस्तथैव च॥ ४०॥**

फिर ७. वैवस्वत, ८. अर्कसावर्णि, ९. ब्रह्मसावर्णि, १०. धर्म सावर्णि, ११. रौच्य, १२वें भूत्य मनु हुए॥ ४०॥

**चतुर्दशैते मनवः संख्यातास्ते यथाक्रमम्।**
**भूतान् भविष्यानिन्द्रांश्च सर्वान् वक्ष्ये तव क्रमात्॥ ४१॥**

इस तरह मैंने तुमको चौदह मनु[1] गिना दिया। अब मैं तुम्हें भूतकाल तथा भविष्यकाल के 'इन्द्रों' के नाम बताऊँगा॥ ४१॥

**विश्वभुक्क विपश्चिच्च सुकीर्तिः शिविरेव च।**
**विभुर्मनोभुवश्चैव तथौजस्वी बलिर्बली॥ ४२॥**
**अद्भुतश्च तथा शान्ती रम्यो देववरो वृषा।**
**ऋतधामा दिवःस्वामी शुचिः शक्राश्चतुर्दश॥ ४३॥**

**चौदह इन्द्र—** विश्वभुक्, विपश्चित्, सुकीर्ति, शिवि, विभु मनोभुव, ओजस्वी तथा बलवान् बलि, अद्भुत, शान्ति, रम्य, वृषा, ऋतुधामा, दिवःस्वामी, शुचि एवं शक्र॥ ४२-४३॥

**एते सर्वे विनश्यन्ति ब्रह्मणो दिवसे प्रिये!**
**रात्रिस्तु तावती ज्ञेया कल्पमानमिदं स्मृतम्॥ ४४॥**

हे प्रिये! ये सभी इन्द्र ब्रह्मा का एक दिन पूर्ण होने पर विनष्ट हो जाते हैं। इतना ही समय-मान ब्रह्मा की रात्रि का भी समझना चाहिये। यह एक कल्प का मान है॥ ४४॥

**प्रथमं श्वेतकल्पस्तु द्वितीयो नीललोहितः।**
**वामदेवस्तृतीयस्तु ततो राथन्तरोऽपरः॥ ४५॥**

**तीस कल्प—** पहले कल्प का नाम है— श्वेत (वाराह) कल्प, दूसरे का नाम है नीललोहित। तीसरे का नाम है— वामदेव, उसके बाद चतुर्थ कल्प है— 'राथन्तर'॥ ४५॥

**रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः।**
**सप्तमोऽथ वृहत्कल्पः कन्दर्पोऽष्टम उच्यते॥ ४६॥**

---

*१. ग्रन्थकार ने यहाँ बारह 'मनु'ओं के ही नाम लिखे हैं। चौदह मनुओं के नाम क्रमशः ये हैं— १. स्वायम्भुव, २. स्वारोचिष ३. औत्तमि, ४. तामस, ५. रैवत, ६. चाक्षुष, ७. वैवस्वत, ८. सावर्णि, ९. दक्षसाविर्णि, १०. ब्रह्मसावर्णि, ११. धर्मसावर्णि, १२. रुद्रसावर्णि, १३. रोच्यदैवसावर्णि एवं १४. इन्द्र सावर्णि। (द्र० आप्टे का संस्कृत हिन्दी शब्द कोष, पृष्ठ ७७३)*

पाँचवाँ 'रौरव', छठा 'प्राण', सातवाँ 'बृहत्कल्प' और आठवाँ कल्प 'कन्दर्प' कहलाता है॥ ४६॥

**सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः।**
**ध्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः॥ ४७॥**

नवम है सद्य, दशम है 'ईशान'। एकादश है 'ध्यान' और द्वादंश है 'सारस्वत' ॥ ४७॥

**त्रयोदश उदानस्तु गरुडोऽथ चतुर्दशः।**
**कौर्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजापतेः॥ ४८॥**

त्रयोदश 'उदान', चतुर्दश 'गरुड़। पञ्चदश कल्प का नाम है 'कौर्म'। इस कल्प में ब्रह्मा की पौर्णमासी (पूर्णिमा तिथि) बीत रही होती है॥ ४८॥

**षोडशो नारसिंहस्तु समाधिस्तु ततः परः।**
**आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्ततोऽपरः॥ ४९॥**

सोलहवें कल्प का नाम है 'नारसिंह' और सत्रहवें का नाम समाधि है। अठारहवें का नाम है 'आग्नेय' एवं उन्नीसवाँ कल्प 'सोमकल्प' कहलाता है॥ ४९॥

**भावनो विंशतिः प्रोक्तः सुप्तमालीति चापरः।**
**वैकुण्ठश्चार्चिषो रुद्रो लक्ष्मीकल्पस्तथापरः॥ ५०॥**
**पञ्चविंशोऽथ वैराजो गौरीकल्पस्तथोंऽधकः।**
**माहेश्वरस्तथा प्रोक्तस्त्रिपुरो यत्र घातितः॥ ५१॥**

बीसवाँ कल्प 'भावन' तथा इक्कीसवाँ 'सुप्तमाली' कहलाता है। बाईसवाँ बैकुण्ठ, तेईसवाँ 'आर्चिष', चौबीसवाँ रुद्रकल्प, पच्चीसवाँ लक्ष्मी-कल्प॥ ५०॥

एतदन्तर, वैराज, गौरीकल्प तथा अन्धक एवं माहेश्वर कल्प कहा गया है, जिस कल्प में त्रिपुरासुर का वध हुआ था॥ ५१॥

**पितृकल्पस्तथांते च या कुहुर्ब्रह्मण : स्मृता।**
**त्रिंशत्कल्पाः समाख्याता ब्रह्मणो मासि वै प्रिये॥ ५२॥**

और अन्त में पितृकल्प आता है, जो कि ब्रह्मा की अमावस्या तिथि का भोगकाल कहलाता है। इस तरह, हे प्रिये! मैंने तुम को

तीस कल्पों का व्याख्यान कर दिया, जो ब्रह्मा के एक मास में होते हैं॥ ५२॥

**अतीताः कथिताः सर्वे वाराहो वर्त्ततेऽधुना।**
**प्रतिपद् ब्रह्मणो यत्र वाराहेणोद्धृता मही॥ ५३॥**

यों मैंने अतीत कल्पों की गणना कर दी है, वर्तमान में वाराह कल्प चल रहा है। यह काल ब्रह्मा की 'प्रतिपत् तिथि काल' कहा जाताहै। इसी कल्प में वाराह भगवान् ने इस पृथ्वी का उद्धार किया था॥ ५३॥

**त्रिंशत्कल्पैः स्मृतो मासो वर्षं द्वादशभिस्तु तैः।**
**अनेन वर्षमानेन तदा ब्रह्माऽष्टवार्षिकः॥**
**आनीतः सोमराजेन सोमनाथः प्रतिष्ठितः॥ ५४॥**

इस तीस कल्प के एक मास की तरह बारह मास बीतने पर ब्रह्मा का एक वर्ष होता है। ब्रह्मा जी जब सर्वप्रथम इस प्रभास क्षेत्र में आये थे, तब उनकी आयु इस वर्षमान से आठ वर्ष की थी। जब सोमराज (चन्द्रमा) से मँगवाकर यहाँ सोमनाथ लिङ्ग की स्थापना की थी॥ ५४॥

**एवं क्षेत्रे निवसतः प्रभासे बालरूपिणः।**
**परार्द्धमेकमगमद् द्वितीयं वर्त्ततेऽधुना॥ ५५॥**

इस तरह बालरूपी ब्रह्मा को इस प्रभास क्षेत्र में रहते हुए एक परार्ध बीत गया और दूसरा परार्ध चल रहा है॥ ५५॥

**एवं महाप्रभावोऽसौ प्रभासक्षेत्रमध्यगः।**
**ब्रह्मा स्वयम्भूर्भगवान् बालत्वात् क्षेत्रमाश्रितः॥ ५६॥**

यों, इस प्रभास क्षेत्र के मध्य में यह महान् प्रभावशाली स्वयम्भु भगवान् ब्रह्मा बालरूप में सदा विराजमान रहते हैं॥ ५६॥

**स वै पूज्यो नमस्कार्यो वन्दनीयो मनीषिभिः।**
**आदौ स एव पूज्यः स्यात् सम्यग्यात्राफलेप्सुभिः॥ ५७॥**

वही ब्रह्मा विद्वान् भक्तों द्वारा पूजनीय हैं, नमस्करणीय हैं, वन्दनीय हैं। प्रभासयात्रा का अधिक से अधिक शुभ फल प्राप्त करने के लिये भक्तों को सर्वप्रथम भगवान् ब्रह्मा का पूजन करना चाहिये॥ ५७॥

**यस्तं पूजयते भक्त्या स मां पूजयते ध्रुवम्।**
**यस्तं द्वेष्टि स मां द्वेष्टि योऽस्य पूज्यो ममैव सः ॥ ५८ ॥**

जो भक्त ब्रह्मा की पूजा करता है वह मानो मेरी ही पूजा करता है। इसी प्रकार जो ब्रह्मा से द्वेष करता है वह मानो मुझसे ही द्वेष करता है। जो ब्रह्मा का पूज्य है वही मेरा भी पूज्य है ॥ ५८ ॥

**ब्रह्मणा पूज्यमानेन अहं विष्णुश्च पूजितः।**
**विष्णुना पूज्यमानेन अहं ब्रह्मा च पूजितः ॥ ५९ ॥**

ब्रह्मा की पूजा किये जाने पर मेरी तथा विष्णु की पूजा भी इसमें समाविष्ट हो जाती है। उसी तरह विष्णु की पूजा किये जाने पर मेरी और ब्रह्मा की पूजा भी पूर्ण हुई समझनी चाहिये ॥ ५९ ॥

**मम पूजनमात्रेण ब्रह्मविष्णू च पूजितौ।**
**सत्त्वं ब्रह्मा रजो विष्णुस्तमोऽहं सम्प्रकीर्तितः ॥ ६० ॥**

इसी तरह मेरी पूजा किये जाने पर ब्रह्मा एवं विष्णु की पूजा भी हुई समझ लेनी चाहिये। ब्रह्मा सत्त्वगुणबहुल, विष्णु रजोगुणबहुल और मैं (शिव) तमोगुणबहुल हूँ— ऐसा कहा जाता है ॥ ६० ॥

**वायुर्ब्रह्माऽनलो रुद्रो विष्णुरापः प्रकीर्तितः।**
**रात्रिर्विष्णुरहो रुद्रो या सन्ध्या स पितामहः ॥ ६१ ॥**

ब्रह्मा को वायु रूप, शिव को अग्निरूप तथा विष्णु को जलरूप समझना चाहिये। इसी तरह विष्णु को रात्रि, रुद्र को दिन तथा ब्रह्मा को सन्ध्या रूप समझना चाहिये ॥ ६१ ॥

**सामवेदो ह्यहं देवि ब्रह्मा ऋग्वेद उच्यते।**
**यजुर्वेदो भवेद्विष्णुः कलाधारो ह्यथर्वणः ॥ ६२ ॥**

हे देवि! मैं सामवेद हूँ, ब्रह्मा ऋग्वेद हैं, विष्णु यजुर्वेद हैं तो कलाधार अर्थववेद हैं ॥ ६२ ॥

**उष्णकालो ह्यहं देवि वर्षाकालः पितामहः।**
**शीतकालो भवेद्विष्णुरेवं कालत्रयं हि सः ॥ ६३ ॥**

देवि! मैं ग्रीष्मकाल हूँ, पितामह वर्षाकाल हैं, विष्णु शीतकाल हैं। इस तरह तीनों कालों की वास्तविकता समझ लो ॥ ६३ ॥

**दक्षिणाग्निरहं ज्ञेयो गार्हपत्यो हरिः स्मृतः।**
**ब्रह्मा चाहवनीयस्तु एवं सर्वं त्रिदैवतम् ॥ ६४ ॥**

मैं दक्षिणाग्नि हूँ तो विष्णु गार्हपत्य अग्नि हैं तथा ब्रह्मा आह्वनीय अग्नि हैं। इस तरह सब कुछ त्रिदेवमय है॥ ६४॥

**अहं लिङ्गस्वरूपस्थो भगो विष्णु प्रकीर्तितः।**
**बीजसंस्थो भवेद् ब्रह्मा विष्णुरापः प्रकीर्तितः॥ ६५॥**
**अहमाकाशरूपस्थ एवं तत्त्वमयं प्रभुः।**
**आकाशात् स्त्रवते यच्च तद्बीजं ब्रह्मसंस्थितम्॥**
**स्वरूपं ब्राह्ममाश्रित्य ब्रह्मा बीजप्ररोहकः॥ ६६॥**

मैं लिङ्गस्वरूपस्थ हूँ तो विष्णु भगस्वरूप हैं और ब्रह्मा बीज (वीर्य) स्वरूप हैं तथा विष्णु ही ज़लस्वरूप हैं।

मैं आकाशरूपस्थ हूँ, आकाश से जिसका स्त्रवण होता है वह ब्रह्मा में जाकर स्थित होता है। वह ब्रह्मस्वरूप का आश्रयण कर लेता है। यहाँ ब्रह्मा ही बीजप्ररोहक हैं॥ ६५-६६॥

**नाभिमध्ये स्थितो ब्रह्मा विष्णुश्च हृदयान्तरे।**
**वक्रमध्ये अहं देवि आधारः सर्वदेहिनाम्॥ ६७॥**

हे देवि! ब्रह्मा नाभि में स्थित रहते हैं तो विष्णु हृदय में। मैं मुख में स्थित रहता हूँ। यों हम तीनों देवता ही सब प्राणियों के आधार हैं॥ ६७॥

**यश्चाहं स स्वयं ब्रह्मा यो ब्रह्मा स हुताशनः।**
**या देवी स स्वयं विष्णुर्यो विष्णुः स च चन्द्रमाः॥ ६८॥**

जो मैं हूँ वे ही वे स्वयं ब्रह्मा हैं। जो ब्रह्मा हैं वही अग्नि हैं। जो देवी (शक्ति) है वही विष्णु है। जो विष्णु है वही चन्द्रमा है॥ ६८॥

**यः कालः स स्वयं ब्रह्मा यो रुद्रः स च भास्करः।**
**एवं शक्तिविशेषेण परं ब्रह्म स्थितं प्रिये॥ ६९॥**

जिसे काल कहते हैं वही ब्रह्मा है, जो रुद्र है वही सूर्य है। हे प्रिये! इस तरह यह परब्रह्म कोई न कोई आकार लेकर इस संसार में स्थित है॥ ६९॥

**ॐकारस्तत्परं ब्रह्म गायत्री प्रकृतिः परा।**
**उभावेतौ नरो ज्ञात्वा न विच्यवति मुच्यते॥ ७०॥**

यह जो ॐकार है यही परब्रह्म है, गायत्री मन्त्र ही परा

प्रकृति है। इन दोनों का सम्यग्ज्ञाता ही भवबन्धन से छुटकारा पा सकता है, मुक्त हो पाता है॥ ७०॥

**एवं यो वेद देवेशि अद्वैतं परमाक्षरम्।**
**स सर्वं वेद नैवान्यो भेदकर्त्ता नराधमः॥ ७१॥**

हे देवेशि! इस तरह जो बुद्धिमान् उस अद्वैत परम अक्षर के विषय में जानता है वही वास्तविक ज्ञानी है, दूसरा नहीं। भेदवादी पामरजन तो निकृष्ट ही कहलाते हैं॥ ७१॥

**एकरूपं परं ब्रह्म कार्यभावात् पृथक्स्थितः।**
**यस्तं द्वेष्टि वरारोहे ब्रह्मद्वेष्टा स उच्यते॥ ७२॥**

यों तो यह परब्रह्म एक ही रूप ही है, परन्तु कार्यभाव के कारण पृथक् पृथक् दिखायी देता है। अतः हे वरारोहे! उससे द्वेष करने वाला 'ब्रह्मद्वेष्टा' कहलाता है॥ ७२॥

**दक्षिणाङ्गे स्थितो ब्रह्मा वामाङ्गे मम केशवः।**
**यस्तयोर्द्वेषमाधत्ते स द्वेष्टा मम भामिनि!॥ ७३॥**

हमारा दक्षिणाङ्ग यदि ब्रह्मा है तो वामाङ्ग विष्णु है। अतः हे भामिनि! उनसे द्वेष करने वाला वस्तुतः मुझ से ही द्वेष करता है॥ ७३॥

**एवं ज्ञात्वा वरारोहे ह्यभिन्नेनान्तरात्मना।**
**ब्रह्माणं केशवं रुद्रमेकरूपेण पूजयेत्॥ ७४॥**

इस प्रकार इन तीनों को अभिन्नात्मा जानकर, हे वरारोहे! ब्रह्मा, विष्णु एवं शिव की समान भाव से पूजा करनी चाहिये॥ ७४॥

*स्कन्दपुराणान्तर्गत प्रभासखण्ड में ब्रह्मार्चनप्रसङ्गवर्णनात्मक एक सौ पाँचवाँ अध्याय समाप्त॥*



# ब्रह्मणः पूजाविधानम्

**ईश्वर०**

**अथ पूजाविधानं ते कथयामि समासतः।**
**भक्तिभेदान् पृथक् तस्य ब्रह्मणो बालरूपिणः।**
**रथयात्राविधानं तु स्तोत्रमन्त्रविधिक्रमम्॥ १॥**

**ईश्वर—** अब मैं तुम्हें उस बालरूपी ब्रह्मा की पूजाविधि संक्षेप से बताऊँगा, साथ ही उनके भक्तिभेद भी बताऊँगा। उसकी रथयात्राविधि, तत्सम्बद्ध स्तोत्र, मन्त्रों की विधि भी क्रमशः बताऊँगा॥ १॥

**विविधा भक्तिरुद्दिष्टा मनोवाक्कायसम्भवा।**
**लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा॥ २॥**

ब्रह्मा जी की मानसिक, वाचिक एवं कायिक भेद से नाना प्रकार की भक्ति कही गयी है।

लौकिक, वैदिक एवं आध्यात्मिक भेद से भी वह भक्ति विभक्त की जा सकती है॥ २॥

**ध्यानधारणया या तु वेदानां स्मरणेन च।**
**ब्रह्मप्रीतिकरी चैषा मानसी भक्तिरुच्यते॥ ३॥**

**मानसी भक्ति—** ध्यान, धारणा से, वैदिक मन्त्रों के जप से, ब्रह्मा में श्रद्धा-उत्पाद करनेवाली भक्ति 'मानसी भक्ति' कहलाती है॥ ३॥

**मन्त्रवेदनमस्कारैरग्निश्राद्धविधानकैः।**
**जाप्यैश्च धारणैश्चैव वाचिकी भक्तिरुच्यते॥ ४॥**

**वाचिकी भक्ति—** मन्त्रों के, वेदों के सूक्तों के माध्यम से, विविध नमस्कारों से, अग्नि में विशिष्ट आहुतियों से, श्राद्धविधियों से, जपों से, की धारणा से की गयी भक्ति 'वाचिकी भक्ति' कहलाती है॥ ४॥

**व्रतोपवासनियमैश्चित्तेंन्द्रियनिरोधिभिः ।**
**कृच्छ्रसन्तपनैश्चान्यैस्तथा चान्द्रायणादिभिः ॥ ५ ॥**
**ब्रह्मोक्तैश्चोपवासैश्च तथान्यैश्च शुभव्रतैः ।**
**कायिकी भक्तिराख्याता त्रिविधा तु द्विजन्मनाम् ॥ ६ ॥**

**कायिकी भक्ति—** व्रत उपवासादि के नियमों से, चित्तनिरोध तथा इन्द्रियनिरोध से, कृच्छ्र चान्द्रायण आदि व्रतों से ब्रह्मा के प्रति कहे गये उपवासों से एवं अन्य शुभ व्रतों से ब्राह्मणों द्वारा की गयी भक्ति 'कायिकी भक्ति' कहलाती है, इस प्रकार से त्रिधा भक्ति वर्णित है ॥ ५–६ ॥

**गोघृतक्षीरदधिभिर्मध्विक्षुसुकुशोदकैः ।**
**गंधमाल्यैश्च विविधैर्वस्तुभिश्चोपपादिभिः ॥ ७ ॥**
**घृतगुग्गुलधूपैश्च कृष्णागुरुसुगन्धिभिः ।**
**भूषणैर्हेमरत्नाद्यैश्चित्राभिः स्त्रग्भिरेव च ॥ ८ ॥**
**न्यासैः परिसरैः स्तोत्रैः पताकाभिस्तथोत्सवैः ।**
**नृत्यवादित्रगीतैश्च सर्ववस्तूपहारकैः ॥ ९ ॥**
**भक्ष्यभोज्यान्नपानैश्च या पूजा क्रियते नरैः ।**
**पितामहं समुद्दिश्य सा भक्तिर्लौकिकी मता ॥ १० ॥**

**लौकिकी भक्ति—** गौ के घी, दूध, दही, मधु, इक्षुरस तथा कुशोदक से, विविध गन्ध द्रव्य एवं मालाओं से ऐसी ही अन्य उपयुक्त वस्तुओं से ॥ ७ ॥

घृत, गुग्गुलु, धूप, कृष्ण (लोहवान) अगरु आदि गन्धद्रव्यों से नानाविध अलङ्कारों से, सुवर्ण एवं रत्नों से, विविध मालाओं से ॥ ८ ॥

नृत्य वादय एवं सङ्गीत से, अनेकविध वस्तुओं के उपहार से, नानाविध न्यास परिसर एवं स्तोत्रों से, चित्र विचित्र पताकाओं तथा विविध उत्सवों से ॥ ९ ॥

तरह तरह के खादनीय भोजनीय अन्नविकारों तथा पेय द्रव्यों से लोगों द्वारा ब्रह्मा की जो पूजा-भक्ति की जाती है वह 'लौकिकी भक्ति' कहलाती है ॥ १० ॥

**वेदमन्त्रहविर्भागैः क्रिया या वैदिकी स्मृता॥ ११॥**

**वैदिकी भक्ति**— वैदिक मन्त्रों एवं हविर्भागों से जो ब्रह्मा जी की भक्ति की जाती है वह 'वैदिकी भक्ति' कहलाती है॥ ११॥

**दर्शे च पौर्णमास्यां च कर्त्तव्यं चाग्निहोत्रजम्।**
**प्राशनं दक्षिणादानं पुरोडाश इति क्रिया॥ १२॥**
**इष्टिर्धृतिः सोमपानं याज्ञियं कर्म सर्वशः।**
**ऋग्यजुसामजाप्यानि संहिताध्ययनानि च॥**
**कृता ब्रह्माणमुद्दिश्य सा भक्तिर्वैदिकी मता॥ १३॥**

अमावस्या एवं पूर्णिमा के दिन अग्निहोत्रजन्य प्राशन, दक्षिणादान, पुरोडाश, इष्टि, धृति, सोमपान, यज्ञसम्बद्ध कर्म, ऋग् यजुः, समावेद के मन्त्रों का जप, संहिताओं का एक निश्चित पाठ— ब्रह्मा के उद्देश्य से की गयी ये सब क्रियाएँ वैदिकी भक्ति कहलाती है॥ १२-१३॥

**प्राणायामपरो नित्यं ध्यानवान्विजितेन्द्रियः।**
**भैक्ष्यभक्षी व्रती चापि सर्वप्रत्याहृतेन्द्रियः॥ १४॥**
**धारणं हृदये कृत्वा ध्यायमानः प्रजेश्वरम्।**
**हृत्पद्मकर्णिकासीनं रक्तवर्णं सुलोचनम्॥ १५॥**
**पश्यन्तु द्योतितमुखं ब्रह्माणं सुकटीतटम्।**
**रक्तवर्णं चतुर्बाहुं वरदाभयहस्तकम्॥**
**एवं यश्चिन्तयेद्देवं ब्रह्मभक्तः स उच्यते॥ १६॥**

**ब्रह्मभक्त**— जो आराधक प्राणायाम एवं ध्यानक्रिया के सहारे से इन्द्रियों का संयम करते हुए भिक्षान्न से जीवनयापन करता हुआ व्रत पूर्वक सभी इन्द्रियों को अन्तर्मुख कर॥ १४॥

हृदय में धारण करता हुआ ब्रह्मा की मूर्ति का इस प्रकार ध्यान करता है— हृत्कमल की ग्रन्थि पर वे विराजमान हैं, रक्तवर्ण हैं, सुन्दर नेत्रों वाले हैं॥ १५॥

जिनका कटिप्रदेश नयनाभिराम है, मुख कमल आभावान् है, वे रक्तवर्ण हैं, चतुर्बाहु हैं, वरद अभयप्रद हाथ उठाये हुए हैं। इस प्रकार जो ब्रह्मा का ध्यान करता है, वह 'ब्रह्मभक्त' कहलाता है॥ १६॥

**विधिं च शृणु मे देवि यः स्मृतः क्षेत्रवासिनाम्॥ १७॥**

**क्षेत्रवासी—** देवि! अब तुम ब्रह्मा के क्षेत्रवासी भक्तों के विषय में सुनो॥ १७॥

**निर्ममा निरहङ्कारा निःसङ्गा निष्परिग्रहाः।**
**चतुर्वर्गेऽपि निःस्नेहाः समलोष्टाश्मकाञ्चनाः॥ १८॥**
**भूतानां कर्मभिर्नित्यं त्रिविधैरभयप्रदाः।**
**प्राणायामपरा नित्यं परध्यानपरायणाः॥ १९॥**
**जापिनः शुचयो नित्यं यतिधर्मक्रियापराः।**
**साङ्ख्ययोगविधिज्ञा ये धर्मविच्छिन्नसंशयाः।**
**ब्रह्मपूजारता नित्यं ते विप्राः क्षेत्रवासिनः॥ २०॥**

ये ममत्वरहित, निरहङ्कार, निःसङ्ग, अपरिग्रही, धर्म, अर्थ, काम, मोक्ष— इनके प्रति निरपेक्ष, ढेला, पत्थर एवं सुवर्ण के प्रति समभाव रखने वाले॥ १८॥

अपने कायिक, वाचिक मानसिक कर्मों से प्राणियों को अभय प्रदान करने वाले, प्राणायाम एवं ध्यानभावना में मग्न॥ १९॥

मन्त्रजपकर्ता, शुद्धभाव वाले, यतिधर्म में तत्पर, साङ्ख्ययोग की विधियों को जानने वाले, धर्मज्ञान से अपने मानसिक सन्देहों को दूर करने वाले, निरन्तर ब्रह्मा की पूजा में रत ऐसे ब्राह्मण 'क्षेत्रवासी' कहलाते हैं॥ २०॥

**तैर्यथा पूजनीयो वै बालरूपी पितामहः।**
**तथाहं कीर्त्तयिष्यामि शृणुष्वेकमनाः प्रिये॥ २१॥**
**स्नात्वा तु विमले तीर्थे शुक्लाम्बरधरः शुचिः।**
**पूजोपहारसंयुक्तस्ततो ब्रह्माणमर्चयेत्॥ २२॥**

**क्षेत्रवासियों द्वारा ब्रह्मा की पूजाविधि—** उन क्षेत्रवासियों द्वारा बालरूपी पितामह की पूजा जिस प्रकार करनी चाहिये वह मैं बताऊँगा। अब इस विषय में मुझसे सावधानतया सुनिये—

निर्मल तीर्थ में स्नान करके शुद्ध होकर, श्वेतवस्त्र पहनकर, पूजा-सामग्री साथ में लेकर, ब्रह्मा की पूजा प्रारम्भ करे॥ २१-२२॥

**पूर्वं संस्नाप्य विधिना पञ्चामृतरसोदकैः।**
**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्॥ २३॥**

सर्वप्रथम देवता को पञ्चामृत एवं शुद्धोदक से विधिपूर्वक स्नान करावे। गोमूत्र, गोमय, दूध, दधि, नवीन सर्पि (घी) एवं कुशोदक॥ २३॥

**गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्।**
**आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि॥ २४॥**

इनमें— गायत्रीमन्त्र से गोमूत्र का ग्रहण करे। गन्धद्वारा गोमय का ग्रहण करे। "आप्यायस्व" इस मन्त्र से दूध एवं 'दधि क्राव्णो" इस मन्त्र से दधि ग्रहण करे॥ २४॥

**तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्।**
**आपोहिष्ठेति मन्त्रेण पञ्चगव्येन स्नापयेत्॥ २५॥**

"तेजोऽसि शुक्रम्" इस मन्त्र से घृत को, "देवस्य त्वा" इस मन्त्र से कुशोदक को ग्रहण करें और "आपोहिष्ठा" इस मन्त्र का उच्चारण करते हुए पञ्चगव्य से ब्रह्मा जी को स्नान करावे॥ २५॥

**कपिलापञ्चगव्येन कुशवारियुतेन च।**
**स्नापयेन्मन्त्रपूतेन ब्रह्मस्नानं हि तत्स्मृतम्॥ २६॥**

**ब्रह्मस्नान**— कपिला गौ के पञ्चगव्य से या मन्त्रपूत कुशोदक से ब्रह्मा जी को कराया गया स्नान 'ब्रह्मस्नान' कहलाता है॥ २६॥

**वर्षकोटिसहस्त्रैस्तु यत्पापं समुपार्जितम्।**
**सुरज्येष्ठं तु संस्नाप्य दहेत्सर्वं न संशयः॥ २७॥**

हजारों वर्ष पूर्व किया गया महापाप भी देवता को ब्रह्मस्नान कराने से विनष्ट हो जाता है। इसमें कोई सन्देह नहीं है॥ २७॥

**एवं संस्नाप्य विधिना ब्रह्माणं बालरूपिणम्।**
**कपूरागिरुतोयेन ततः संस्नापयेद् द्विजः॥ २८॥**

इस तरह उन बालरूपी ब्रह्मा को (वैदिक) विधिपूर्वक स्नान कराकर, भक्तजन कपूर, अगर आदि सुगन्धित द्रव्य मिलाकर शुद्धजल से स्नान करावे॥ २८॥

**एवं कृत्वार्चयेद्देवं गायत्रीन्यासयोगतः।**
**मूर्ध्नः पादतलं यावत्प्रणवं विन्यसेद् बुधः॥ २९॥**

**गायत्रीन्यास**— इस प्रकार, गायत्रीन्यास के द्वारा देवता की

पूजा प्रारम्भ करे। शिर से चरणों तक प्रणव से प्रारम्भ कर विद्वान् पुरुष इस तरह न्यास करे॥ २९॥

तकारं विन्यसेन्मूर्ध्नि सकारं मुखमण्डले।
विकारं कण्ठदेशे तु तुकारं चाङ्गसन्धिषु॥ ३०॥

'त' कार को मूर्धा पर रखे। 'स' कार को मुखमण्डल पर। 'वि' कार को कण्ठदेश में तथा 'तु' कार को अङ्गसन्धियों में॥ ३०॥

र्वकारं हृदि मध्ये तु रेकारं पार्श्वयोर्द्वयोः।
णिकारं दक्षिणे कुक्षौ यकारं वामसंज्ञिते॥ ३१॥

'व' कार को हृदय के मध्य में, 'र' कार को दोनों पशर्वों में, 'णि' कार को दक्षिण कुक्षि में और 'य' कार को वाम कुक्षि में॥३१॥

भकारं कटिनाभिस्थं गोकारं जङ्घयोर्द्वयोः।
देकारं जानुनोर्न्यस्य वकारं पादपद्मयोः॥ ३२॥

'भ' कार को कटिनाभि में, 'गौकार को दोनों जङ्घों में, 'दे' कार को जानुओं पर, तथा 'व' कार को देवता के दोनों चरणों पर रखकर॥ ३२॥

स्यकारमंगुष्ठयोर्न्यस्य धीकारमुरसि न्यसेत्।
मकारं जानुमूले तु हिकारं गुह्यमाश्रितम्॥ ३३॥

'स्य' कार को अङ्गुष्ठों पर, 'धी' कार को उर पर रखे। 'म' कार को जानुमूल पर तथा 'हि' कार को गुह्य प्रदेश पर रखे॥ ३३॥

धिकारं हृदये न्यस्य योकारं चाधरोष्ठके।
योकारं च तथैवान्यमुत्तरोष्ठे न्यसेत्सुधीः॥ ३४॥

'धि' कार को हृत्प्रदेश पर रखकर 'यो' कार को नीचे के ओष्ठ पर, दूसरे 'यो' कार को बुद्धिमान् भक्त उत्तर ओष्ठ पर रखे॥ ३४॥

नकारं नासिकाग्रे तु प्रकारं नेत्रमाश्रितम्।
चोकारं च भ्रुवोर्मध्ये दकारं प्राणमाश्रितम्॥ ३५॥

नासिका के अग्रभाग पर 'न' कार को, नेत्रों पर 'प्र' कार को, दोनों भौंहों पर 'चो' कार को, 'द' कार को प्राण पर रखे॥ ३५॥

यात्कारं च ललाटांते विन्यसेद्वै सुरेश्वरि!
न्यासं कृत्वाऽऽत्मनो देहे देवे कुर्यात्तथा प्रिये॥ ३६॥

हे सुरेश्वरि! 'यात्' कार को ललाट प्रदेश पर भक्त द्वारा न्यस्त करना चाहिये। इस प्रकार अपने देह पर न्यास कर हे प्रिये! देवता के प्रति भी यह गायत्रीन्यास करना चाहिये॥ ३६॥

**सर्वोपहारसम्पन्नं कृत्वा सम्यङ् निरीक्षयेत्।**
**कुंकुमागरुकर्पूरचन्दनेन विमिश्रितम्॥ ३७॥**

**पूजन—** इसके बाद कुङ्कुम, अगर, कपूर, चन्दन मिश्रित उपहार देवता के सम्मुख रखे। सभी उपहारसामग्री का निरीक्षण करे॥३७॥

**गन्धतोयैरुपस्कृत्य गायत्र्या प्रणवेन च।**
**प्रोक्षयेत् सर्वद्रव्याणि पश्चादर्चनमारभेत्॥ ३८॥**

उस समस्त सामग्री को गायत्री मन्त्र से तथा प्रणव से सुगन्धित जल से शुद्ध करके ही पूजन प्रारम्भ करना चाहिये॥ ३८॥

**दिव्यैः पुष्पैः सुगन्धैश्च मालतीकमलादिभिः।**
**अशोकैः शतपत्रैश्च बकुलैः पूजयेत् क्रमात्॥ ३९॥**

दिव्य एवं सुगन्धित मालती तथा कमल आदि पुष्पों से, अशोक, शतपत्र या बकुल वृक्ष के पत्रों से क्रमशः पूजा करे॥ ३९॥

**कृष्णागरुसुधूपेन घृतदीपैस्तथोत्तमैः।**
**ततः प्रदापयेत्तत्र नैवेद्यं विविधं क्रमात्॥ ४०॥**

लोहबान, अगर, धूप तथा घी के दीपक से देवता की पूजा करे। तदनन्तर विविध प्रकार का नैवेदंय देवता को अर्पित करे॥ ४०॥

**खण्डलड्डुकश्रीवेष्टकांसाराशोकपल्लवैः ।**
**स्वस्तिकोल्लिपिकादुग्धतिलवेष्टकिलाटिकाम्॥ ४१॥**

देवता को चीनी से बने लड्डू, श्रीवेष्टकांसार, स्वस्तिका, उल्लिपिका, दुग्ध (खोआ) मिश्रित तिल के लड्डू एवं किलाटिका आदि पक्वान्न विशेषों का नैवेद्य अर्पित करे॥ ४१॥

**फलानि चैव पक्वानि मूलमन्त्रेण दापयेत्।**
**ऋग्वेदं च यजुर्वेदं सामवेदं च पूजयेत्॥ ४२॥**

इसी के साथ पके फल भी मूलमन्त्र का उच्चारण करते हुए नैवेद्य के रूप में देवता को चढ़ावे॥ ४२॥

**ज्ञानं वैराग्यमैश्वर्यं धर्मं सम्पूजयेद् बुधः।**
**ईशानादिक्रमाद्देवि दिशांसु विदिशासु च॥ ४३॥**

साथ ही ऋग्वेद, यजुर्वेद एवं साम.वेद की पूजा करे। एतदनन्तर हे देवि! बुद्धिमान् आराधक को ज्ञान, वैराग्य, ऐश्वर्य एवं धर्म की भी ईशानादि क्रम से दिशा, विदिशाओं में पूजा करनी चाहिये॥ ४३॥

**चतुर्द्दशविद्यास्थानानि ब्रह्मणोऽग्रे प्रपूजयेत्।**
**हृदयानि ततो न्यस्य देवस्य पुरतः क्रमात्॥ ४४॥**

इसी तरह आराधक को, देवता के सम्मुख बैठकर, चौदह विद्यास्थानों की भी पूजा करनी चाहिये. तब देवता के आगे हृदयादिन्यास करे॥ ४४॥

**आपोहिष्ठेति ऋगियं हृदयं परिकीर्त्तितम्।**
**ऋतं सत्यं शिखा प्रोक्तं उदुत्यं नेत्रमादिशेत्॥ ४५॥**

'आपो हिष्ठा' यह ऋग्मन्त्र हृदय में न्यस्त करे। ''ऋतं सत्यं'' शिखा पर तथा 'उदुत्यं' यह मन्त्र नेत्रों पर न्यस्त करे॥ ४५॥

**चित्रं देवानामित्येवं सर्वलोकेषु विश्रुतम्।**
**ब्रह्मंस्ते छादयामीति कवचं समुदाहृतम्॥ ४६॥**

'चित्रं देवानाम्' यह मन्त्र सर्वलोक प्रसिद्ध है। 'ब्रह्मंस्ते छादयामि' यह मन्त्र 'कवच' कहा गया है॥ ४६॥

**भूर्भुवः स्वरिति तथा शिरसे परिकीर्त्तितम्।**
**गायत्र्या पूजयेद्देवमोङ्कारेणाभिमंत्रितम्॥ ४७॥**

'भूर्भुवः स्वः' इस मन्त्र से देवता के शीर्ष का पूजन करना चाहिये। देवता की पूजा ॐकार युक्त गायत्रीमन्त्र से करनी चाहिये॥ ४७॥

**प्रणवेनापरान् सर्वानृग्वेदादीन् प्रपूजयेत्।**
**गायत्री परमो मन्त्रो वेदमाता विभावरी॥ ४८॥**

अन्य सब ऋग्वेदादि की पूजा ॐकार उच्चारणपूर्वक करे। यहाँ यह गायत्रीमन्त्र उत्कृष्टतम मन्त्र है। इसे 'वेदमाता' कहा जाता है॥ ४८॥

**गायत्र्यक्षरतत्त्वैस्तु ब्रह्माणं यस्तु पूजयेत्।**
**उपोष्य पञ्चदश्यां तु स याति परमं पदम्॥ ४९॥**

जो आराधक गायत्रीमन्त्र के अक्षर तत्त्वों से ब्रह्मा की पूजा करता है और पूर्णिमा के दिन उपवासव्रत रखता है वह परम पद (मोक्ष) प्राप्त कर लेता है॥ ४९॥

**संसारसागरं घोरमुत्तितीर्षुर्द्विजो यदि।**
**प्रभासे कार्त्तिके मासि ब्रह्माणं पूजयेत् सदा॥ ५०॥**

यदि आराधक इस घोर संसारमार्ग को पार करना चाहता है तो उसे कार्तिक मास में प्रभास तीर्थ जाकर वहाँ ब्रह्मा का पूजन करना चाहिये॥ ५०॥

**यस्य दर्शनमात्रेण अश्वमेधफलं लभेत्।**
**कस्तं न पूजयेद्विद्वान् प्रभासे बालरूपिणम्॥ ५१॥**

जिसके दर्शनमात्र से अश्वमेधयज्ञ का फल प्राप्त होता है, तब कोई बुद्धिमान् आराधक प्रभास क्षेत्र में आकर उन बालरूपी ब्रह्मा की पूजा करने में क्यों हिचकिचायगा!॥ ५१॥

**यस्यैकदिवसप्रान्ते सदेवासुरमानवाः।**
**विलयं यान्ति देवेशि कस्तं न प्रतिपूजयेत्॥ ५२॥**

हे देवेशि! जिसके एक दिवस भाग में ही सभी देवता, असुर एवं मानव विनष्ट हो जाते हैं, ऐसे समर्थ देवता की पूजा करने में कौन बुद्धिमान् आनाकानी करेगा!॥ ५२॥

**पिता यः सर्वदेवानां भूतानां च पितामहः।**
**यस्मादेष स तैः पूज्यो ब्राह्मणैः क्षेत्रवासिभिः॥ ५३॥**

वे ब्रह्मा सभी देवताओं के पिता हैं, सभी प्राणियों के पितामह हैं, अतः सभी क्षेत्रवासी आराधकों को उनकी पूजा करनी चाहिये॥५३॥

**रुद्ररूपी विश्वरूपी स एवं भुवनेश्वरः।**
**पौर्णमास्यामुपोषित्वा ब्रह्माणं जगतां यतिम्।**
**अर्चयेद्यो विधानेन सोऽश्वमेधफलं लभेत्॥ ५४॥**

वह जगत्पति ब्रह्मा ही रुद्ररूप तथा विश्वरूप हैं तथा सकल भुवनों के स्वामी हैं। अतः पूर्णिमा के दिन उपवास करते हुए जो आराधक उन ब्रह्मा की विधिपूर्वक पूजा करता है वह अश्वमेध यज्ञ का फल प्राप्त करता है॥ ५४॥

रथयात्रा—

कार्त्तिके मासि देवस्य रथयात्रा प्रकीर्त्तिता।
यां कृत्वा मानवो भक्त्या याति ब्रह्मसलोकताम्॥ ५५॥

कार्तिक मास में इन ब्रह्मदेव की रथयात्रा का बहुत वर्णन है, जिसको भक्तिपूर्वक पूर्ण कर कोई भी ब्रह्मा का भक्त, मृत्यु के बाद, ब्रह्मलोक प्राप्त कर सकता है॥ ५५॥

कार्त्तिके मासि देवेशि पौर्णमास्यां चतुर्मुखम्।
मार्गेण चर्मणा सार्द्धं सावित्र्या च परन्तपः॥ ५६॥
भ्रामयेन्नगरं सर्वं नानावाद्यैः समन्वितम्।
स्थापयेद् भ्रामयित्वा तु सकलं नगरं नृपः॥ ५७॥
ब्राह्मणान् भोजयित्वाग्रे शाण्डिलेयं प्रपूज्य च।
आरोपयेद्रथे देवं पुण्यवादित्रनिःस्वनैः॥ ५८॥

हे देवेशि! कार्तिक मास में पौर्णमासी के दिन चतुर्मुख ब्रह्मा जी (की मूर्ति) को मृगचर्म पहनाकर, सावित्री के साथ रथ में बैठाकर॥ ५६॥

कोई राजा विविध गीत नृत्य एवं वाद्यों के साथ सम्पूर्ण नगर में घुमावे। तथा वह नगर यात्रा पूर्ण होने पर॥ ५७॥

सर्वप्रथम शाण्डिल्य गोत्रोत्पन्न ब्राह्मण की पूजा कर, सभी ब्राह्मणों को भोजन कराकर, माङ्गलिक बाजे-गाजे के साथ ब्रह्मा जी को रथ पर विराजमान करे॥ ५८॥

रथाग्रे शाण्डिलीपुत्रं पूजयित्वा विधानतः।
ब्राह्मणान् वाचयित्वा च कृत्वा पुण्याहमङ्गलम्॥ ५९॥

रथ के आगे आगे विधिपूर्वक शाण्डिल्य ब्राह्मण का पूजन कर तथा अन्य ब्राह्मणों का भी पुण्याहवाचन करे॥ ५९॥

देवमारोपयित्वा तु रथे कुर्यात् प्रजागरम्।
नानाविधैः प्रेक्षणकैर्ब्रह्मघोषैश्च पुष्कलैः॥ ६०॥

देवता (की मूर्ति) को विविध माङ्गलिक कार्यक्रम एवं ब्रह्मघोषों एवं दर्शनीय झाँकियों के साथ रथ में स्थापित करे॥ ६०॥

नारोढव्यं रथे देवि शूद्रेण शुभमिच्छता।
नाधर्मेण विशेषेण मुक्त्वैकं भोजकं प्रिये॥ ६१॥

**ब्रह्मणो दक्षिणे पार्श्वे सावित्रीं स्थापयेत् प्रिये।**
**भोजकं वामपार्श्वे तु पुरतः पङ्कजं न्यसेत्॥ ६२॥**

देवि! इस रथ पर किसी शूद्र को किसी भी दशा में नहीं चढ़ना चाहिये, यदि वह अपना हित चाहता है। प्रिये! इसी तरह, किसी अधर्मी को भी उस रथ पर नहीं चढ़ना चाहिये, केवल एक भोजक (पुजारी) को छोड़कर॥ ६१॥

हे प्रिये! उस रथ में ब्रह्मा के दक्षिण पार्श्व में सावित्री की स्थापना करे। वामपार्श्व में पुजारी बैठे और देवता के सामने पद्मपुष्प रखे॥ ६२॥

**एवं तूर्यनिनादैश्च शङ्खशब्दैश्च पुष्कलैः।**
**भ्रामयित्वा रथं देवि पुरं सर्वं च दक्षिणम्।**
**स्वस्थाने स्थापयेद्भूयः कृत्वा नीराजनं बुधः॥ ६३॥**

इस तरह बुद्धिमान् राजा तुरही आदि वाद्यों के साथ, शङ्खध्वनिपूर्वक उस रथ को समस्त नगर में दक्षिण दिशा से भ्रमण करावे। तदनन्तर, यथास्थान लाकर वहाँ पुनः स्थापित कर देवता की पूजा करे॥ ६३॥

**य एवं कुरुते यात्रां भक्त्या यश्चापि पश्यति।**
**रथं वाऽऽकर्षयेद्यस्तु स गच्छेद्ब्रह्मणः पदम्॥ ६४॥**

इस प्रकार जो यात्रा करता है, या उस अवस्था में देवता के दर्शन करता है, या उस रथ के खींचने में सहायक होता है। वह भक्त देहत्याग के बाद, ब्रह्मलोक की प्राप्ति करता है॥ ६४॥

**यो दीपं धारयेत्तत्र ब्रह्मणो रथपृष्ठगः।**
**पदे पदेऽश्वमेधस्य स फलं विन्दते महत्॥ ६५॥**

या जो भक्त उस रथ के पीछे पीछे प्रज्वलित दीपक लेकर चलता है वह पद-पद पर अश्वमेधयज्ञ का महान् फल प्राप्त करता है॥ ६५॥

**यो न कारयते राजा रथयात्रां तु ब्रह्मणः।**
**स पच्यते महादेवि रौरवे कालमक्षयम्॥ ६६॥**

जो राजा (अपने राज्य में) ब्रह्मा की रथयात्रा ा समारोह

नहीं करता। हे महादेवि! वह देहपात के बाद रौरवनरक में अनन्त काल तक कष्ट भोगता है॥ ६६॥

**तस्मात् सर्वप्रयत्नेन राष्ट्रस्य क्षेममिच्छता।**
**रथयात्रां विशेषेण स्वयं राजा प्रवर्त्तयेत्॥ ६७॥**

अतः प्रत्येक राजा, अपनी प्रजा का हित चाहते हुए, ब्रह्मा की रथयात्रा का स्वयं आयोजन करे॥ ६७॥

**प्रतिपदि ब्राह्मणांश्चापि भोजयेद्विधिवत् सुधीः।**
**वासोभिरहतैश्चापि गन्धमाल्यानुलेपनैः॥ ६८॥**

तदनन्तर प्रतिपद् के दिन ब्राह्मणों को विधिपूर्वक सुगन्धित पुष्प, माला आदि से सत्कृत कर भोजन करावे, तथा उन्हें नवीन वस्त्रों का दान करे॥ ६८॥

**कार्त्तिके मास्यमावास्यां यस्तु दीपप्रदीपनम्।**
**शालायां ब्रह्मणः कुर्यात् स गच्छेत् परमं पदम्॥ ६९॥**

**मन्दिर में दीपक—** जो भक्त कार्तिकी अमावस्या के दिन ब्रह्मा जी के मन्दिर में दीपक जलाता है उसे अन्त में अवश्य परम पद प्राप्त होता है॥ ६९॥

**उत्सवेषु च सर्वेषु सर्वकाले विशेषतः।**
**पूजयेयुरिमं विप्रा ब्रह्माणं जगतां गुरुम्॥ ७०॥**

अन्य साधारण उत्सवों में भी ब्राह्मणों को कार्य प्रारम्भ करते समय, सर्वप्रथम जगद्गुरु ब्रह्मा का ही पूजन करना चाहिये॥ ७०॥

**यथाकृत्यप्रयोगेण सम्यक्छ्रद्धासमन्विताः।**
**पूज्यो दिव्योपचारेण यथावित्तानुसारतः॥ ७१॥**

सामाजिक कृत्यों के अवसर पर भी, सम्यक् श्रद्धा से युक्त भक्तों को दिव्य उपचार से अपनी वित्तोय स्थिति के अनुसार ब्रह्मा जी की पूजा करते रहना चाहिये॥ ७१॥

**एवं ते कथितं देवि पूजामाहात्म्यमुत्तमम्।**
**प्रभासक्षेत्रमाहात्म्यं ब्रह्मणो बालरूपिणः॥ ७२॥**

हे देवि! इस तरह मैंने आपको देवाधिदेव बालरूप ब्रह्माजी की पूजा तथा उनके आवासस्थल प्रभासक्षेत्र का उत्तम माहात्म्य सुना दिया॥ ७२॥

अष्टोत्तरशतनाम—

**तस्याहं कथयिष्यामि नाम्नामष्टोत्तरं शतम्।**
**प्रदत्वा च पठित्वा च यज्ञायुतफलं लभेत्॥ ७३॥**

अब मैं आपके सम्मुख उनके एक सौ आठ (१०८) नामों का वर्णन करूँगा, जिनके पाठ तथा दूसरों को सुनाने का फल दश हजार यज्ञों के सम्पादन के तुल्य होता है॥ २॥

**गायत्र्या लक्षजाप्येन सम्यग्जप्तेन यत् फलम्।**
**तत् फलं समवाप्नोति स्तोत्रस्यास्य उदीरणात्॥ ७४॥**

गायत्री मन्त्र के एक लाख या निरन्तर जप का जो उत्कृष्ट फल होता है वही फल इस स्तोत्र के पाठ से भी मिलता है॥ ७४॥

**इदं स्तोत्रवरं दिव्यं रहस्यं पापनाशनम्।**
**न देयं दुष्टबुद्धीनां निन्दकानां तथैव च॥ ७५॥**

यह उत्तम एवं दिव्य स्तोत्र गुप्त रखने योग्य है तथा पापनाशक है। दुर्बुद्धि (पापबुद्धि) या देवनिन्दक पुरुषों को इसे कभी नहीं सुनाना चाहिये॥ ७५॥

**ब्राह्मणाय प्रदातव्यं श्रोत्रियाय महात्मनं।**
**विष्णुना हि पुरा पृष्टं ब्रह्मणः स्तोत्रमुत्तमम्॥ ७६॥**

यहाँ, जो ब्राह्मण वेदभावी हो, शुद्धात्मा हो, उसे अवश्य सुनाना चाहिये। भगवान् विष्णु ने भी कभी ब्रह्माजी से इस उत्तम स्तोत्र के विषय में पूछा था॥ ७६॥

**विष्णु०**

**केषु केषु च स्थानेषु देवदेव पितामह!**
**सञ्चिन्त्यस्तन्ममाचक्ष्व त्वं हि सर्वविदुत्तमः॥ ७७॥**

**विष्णु**— हे पितामह! हे देवाधिदेव! आप किन किन स्थानों में किन किन रूपों में ध्यान करने योग्य है, यह मुझे आप बताइये; क्योंकि आप सर्वज्ञों में श्रेष्ठ हैं॥ ७७॥

**ब्रह्मा०**

**पुष्करेऽहं *सुरश्रेष्ठो* गया ां *प्रपिताम्हः*।**
**कान्यकुब्जे *वेदगर्भो* भृगुक्षेत्रे *चतुर्मुखः*॥ ७८॥**

**ब्रह्मा जी**— पुष्कर क्षेत्र में *सुरश्रेष्ठ नाम से* मेरा चिन्तन करना चाहिये, तथा गया तीर्थ में *प्रपितामह* नाम से। इसी तरह कान्यकुब्ज (कन्नौज) में *वेदगर्भ* नाम से एवं भृगुक्षेत्र में *चतुर्मुख* नाम से मेरा ध्यान करना चाहिये॥ ७८॥

**कौबेर्यां *सृष्टिकर्ता* च नन्दिपुर्यां *बृहस्पतिः*।**
**प्रभासे *बालरूपी* च वाराणस्यां *सुरप्रियः*॥ ७९॥**

कौबेरी (अलकापुरी) में *सृष्टिकर्ता*, नन्दिपुरी (पश्चिम दिशा) में *बृहस्पति*, प्रभासक्षेत्र में *बालरूपी* और वाराणसी में *सुरप्रिय* नाम से मेरा चिन्तन करना चाहिये॥ ७९॥

**द्वारावत्यां *चक्रदेवो* वैदिशे *भुवनाधिपः*।**
**पौण्ड्रके *पुण्डरीकाक्षः पीताक्षो* हस्तिनापुरे॥ ८०॥**

द्वारावती (द्वारिका) नगरी में *चक्रदेव*, विदिशा (भेलसा) क्षेत्र में *भुवनाधिप*, तथा पौण्ड्रक (एक प्राचीन देश) में *पुण्डरीकाक्ष*, एवं हस्तिनापुर में *पीताक्ष* नाम से मेरा चिन्तन करना चाहिये॥ ८१॥

**जयन्त्यां *विजयश्चासौ जयन्तः* पुरुषोत्तमे।**
**वाडेषु *पद्महस्तोऽहं* ताम्रलिप्तौ तमोनुदः॥ ८१॥**

जयन्ती (भाद्रपद कृष्णा अष्टमी) के दिन *विजय* तथा पुरुषोत्तम (अधिक मास या जगन्नाथपुरी क्षेत्र) में *जयन्त* तथा वाड देश में *पद्महस्त* एवं ताम्रलिप्ति में *तमोनुद* नाम से मेरा चिन्तन करना चाहिये॥ ८१॥

**आहिच्छत्र्यां *जनानन्दः* काञ्चीपुर्यां *जनप्रियः*।**
**कर्णाटस्य पुरे *ब्रह्मा* ऋषिकुण्डे *मुनिस्तथा*॥ ८२॥**

आहिच्छत्र नगरी में *जनानन्द*, काञ्चीपुरी में *जनप्रिय* नाम से, कर्णाटक प्रदेश में *ब्रह्मा* नाम से तथा ऋषिकुण्ड में *मुनि* नाम से मेरा ध्यान करना चाहिये॥ ८२॥

**श्रीकण्ठे *श्रीनिवासश्च* कामरूपे *शुभङ्करः*।**
***उड्डियाने देवकर्ता स्त्रष्टा* जालन्धरे तथा॥ ८३॥**

श्रीकण्ठ प्रदेश में *श्रीनिवास*, काममरूप में *शुभङ्कर*, उड्डियान प्रदेश में *देवकर्ता*, और जालन्धर में *स्त्रष्टा* नाम से मेरा चिन्तन करना चाहिये॥ ८३॥

**मल्लिकाख्ये तथा *विष्णुर्महेन्द्रे भार्गवस्तथा*।**
***गोनर्दः* स्थविराकारे ह्युज्जयिन्यां *पितामहः*॥ ८४॥**

मल्लिका (श्रीशैलपर्वत) प्रदेश में *विष्णु*, महेन्द्र पर्वत पर *भार्गव*, स्थविराकार प्रदेश में *गोनर्द* तथा उज्जयिनी प्रदेश में *पितामह नाम* से मेरा चिन्तन करना चाहिये॥ ८४॥

**कौशाम्ब्यां तु *महादेवो* ह्ययोध्यायां च *राघवः*।**
***विरिञ्चिश्चि*त्रकूटे तु *वाराहो* विन्ध्यपर्वते॥ ८५॥**

मेरे भक्तों को चाहिये कि वे, कौशाम्बी क्षेत्र में वास करते समय, *महादेव* नाम से मेरी आराधना करें तथा अयोध्या में रहते समय *राघव* नाम से। इसी तरह चित्रकूट में रहते हुए *विरिञ्चि* नाम से तथा विन्ध्याचल क्षेत्र में वास करते हुए *वाराह* नाम से मेरी आराधना करें॥ ८५॥

**गङ्गाद्वारे *सुरश्रेष्ठो* हिमवन्ते तु *शङ्करः*।**
**देहिकायां *स्रुचाहस्तो पद्महस्त*तथाऽर्बुदे॥ ८६॥**

गङ्गाद्वार के पवित्र क्षेत्र में रहते हुए *सुरश्रेष्ठ*, हिमालय में रहते हुए *शङ्कर* नाम से, देहिका क्षेत्र में *स्रुचाहस्त* नाम से तथा अर्बुद क्षेत्र में *पद्महस्त* नाम से मेरी आराधना करनी चाहिये॥ ८६॥

**वृन्दावने *पद्मनेत्रः कुशहस्तश्च* नैमिषे।**
**गोपक्षेत्रे च *गोविन्दः सुरेन्द्रो* यमुनातटे॥ ८७॥**

वृन्दावन क्षेत्र में *पद्मनेत्र* नाम से, नैमिषारण्य क्षेत्र में *कुशहस्त*, गोपक्षेत्र में *गोविन्द* तथा यमुना तट पर रहते हुए सुरेन्द्र नाम से मेरा चिन्तन करना चाहिये॥ ८७॥

**भागीरथ्यां *पद्मतनुः* जनानन्दो जनस्थले।**
**कौङ्कणे च स *मध्वक्षः* काम्पिल्ये *कनकप्रभः*॥ ८८॥**

भागीरथी (गङ्गा) तट पर रहते हुए *पद्मतनु*, जनस्थल क्षेत्र में *जनानन्द*, कौङ्कण क्षेत्र में *मध्वक्ष*, एवं काम्पिल्य क्षेत्र में *कनकप्रभ* नाम से मेरा चिन्तन करना चाहिये॥ ८८॥

**खेटके *चान्नदाता* च *शम्भुश्चैव* क्रतुस्थले।**
**लङ्कायां चैव पौलस्त्यः काश्मीरे *हंसवाहनः*॥ ८९॥**

खेटकक्षेत्र में *अन्नदाता,* क्रतुस्थल में *शम्भु* एवं लङ्काप्रदेश में *पौलस्त्य* नाम से एवं काश्मीर क्षेत्र में *हंसवाहन* नाम से भक्तों को मेरा ध्यान करना चाहिये॥ ८९॥

**वसिष्ठश्चार्बुदे चैव *नारदश्चोत्पलावने*।**
**मेधके *श्रुतिदाता* च प्रयागे *यजुषां पतिः*॥ ९०॥**

अर्बुद क्षेत्र में *वसिष्ठ* नाम से एवं उत्पलवन क्षेत्र में *नारद* नाम से, मेधक क्षेत्र में *श्रुतिदाता* नाम से तथा प्रयागक्षेत्र में *यजुषाम्पति* नाम से मेरा चिन्तन करना चाहिये॥ ९०॥

**शिवलिङ्गे *सामवेदो* मर्कटे च *मधुप्रियः*।**
***नारायणश्च* गोमन्ते विदर्भायां *द्विजप्रियः*॥ ९१॥**

शिवलिङ्ग के सम्मुख *सामवेद,* मर्कटक्षेत्र में *मधुप्रिय* एवं गोमन्तप्रदेश में *नारायण* तथा विदर्भक्षेत्र में *द्विजप्रिय* नाम से मेरा चिन्तन करना चाहिये॥ ९१॥

**अङ्कुलके *ब्रह्मगर्भो* ब्रह्मवाहे *सुतप्रियः*।**
**इन्द्रप्रस्थे *दुराधर्षश्चम्पायां सुरमर्दनः*॥ ९२॥**

अङ्कुलक क्षेत्र में *ब्रह्मगंर्भ,* तथा ब्रह्मवाह क्षेत्र में *सुतप्रिय,* एवं इन्द्रप्रस्थ में *दुराधर्ष* और चम्पाक्षेत्र में *सुरमर्दन* नाम से मेरा ध्यान करना चाहिये॥ ९२॥

**विरजायां *महारूपः सुरूपो* राष्ट्रवर्धने।**
**कदम्बके *जनाध्यक्षो देवाध्यक्षः* समस्थले॥ ९३॥**

विरजा क्षेत्र में *महारूप,* राष्ट्रवर्धन तीर्थ में *सुरूप,* कदम्बक तीर्थ में *जनाध्यक्ष* और समस्थल में *देवाध्यक्ष* नाम से मेरा स्मरण करना चाहिये॥ ९३॥

***गङ्गाधरो* रुद्रपीठे सुपीठे *जलदः* स्मृतः।**
**त्र्यम्बके *त्रिपुरारिश्च* श्रीशैले च *त्रिलोचनः*॥ ९४॥**

रुद्रपीठ में *गङ्गाधर,* सुपीठ क्षेत्र में *जलद* तथा त्र्यम्बक क्षेत्र मे *त्रिपुरारि* और श्रीशैल क्षेत्र में *त्रिलोचन* नाम से मुझको जाना जाता है॥ ९४॥

***महादेवः* प्लक्षपुरे कपाले *वेधनाशनः*।**
**शृङ्गवेरपुरे शौरिर्निमिषे *चक्रधारकः*॥ ९५॥**

प्लक्षपुर में *महादेव कपालक्षेत्र में वेधनाशन*, शृङ्गवेरपुर में *शौरि* तथा निमिष (नैमिषारण्य) तीर्थ में मुझ को *चक्रधारक* नाम से जानना चाहिये॥ ९५॥

**नन्दिपुर्यां *विरूपाक्षो गौतमः* प्लक्षपादपे।**
***माल्यवान्* हस्तिनाथे तु *द्विजेन्द्रो* वाचिके तथा॥ ९६॥**

नन्दिपुरी में मेरी आराधना करते समय *विरूपाक्ष*, पीपल (प्लक्ष) वृक्ष के नीचे मेरी आराधना करते समय *गौतम*, हस्तिनाथ क्षेत्र में आराधना करते समय *माल्यवान्* और वाचिक आराधना करते समय *द्विजेन्द्र* नाम से मुझको स्मरण करना चाहिये॥ ९६॥

**इन्द्रपुर्यां *दिवानाथो* भूतिकायां *पुरन्दरः*।**
***हंसबाहुश्च* चन्द्रायां चम्पायां *गरुडप्रियः*॥ ९७॥**

इन्द्रपुरी में *दिवानाथ*, भूतिका में *पुरन्दर*, चन्द्रा में *हंसबाहु*, तथा चम्पापुरी में *गरुड़प्रिय* नाम से मेरी आराधना करनी चाहिये॥९७॥

**महोदये *महायक्षः सुयज्ञः* पूतके वने।**
**सिद्धेश्वरे *शुक्लवर्णो* विभायां *पद्मबोधकः*॥ ९८॥**

महोदय क्षेत्र में महायक्ष, पूतक वन में *सुयज्ञ* एवं सिद्धेश्वर क्षेत्र में *शुक्लवर्ण* तथा विभा तीर्थ में *पद्मबोधक* नाम से मेरी आराधना करनी चाहिये॥ ९८॥

**देवदारुवने *लिङ्गी* उदकेऽथ *उमापतिः*।**
***विनायको* मातृस्थाने अलकायां *धनाधिपः*॥ ९९॥**

देवदारुवन में मेरी आराधना करते समय *लिङ्गी* नाम से, उदकतीर्थ में आराधना करते समय *उमापति* नाम से, मातृस्थान में आराधना करते समय *विनायक* एवं अलकातीर्थ में आराधना करते समय *धनाधिप* नाम से मेरी आराधना करनी चाहिये॥ ९९॥

**त्रिकूटे चैव *गोविन्दः* पाताले *वासुकिस्तथा*।**
**कोविदारे *युगाध्यक्षः* स्त्रीराज्ये च *सुरप्रियः*॥ १००॥**

त्रिकूट पर्वत पर आराधना करते समय *गोविन्द* नाम से तथा पाताल में *वासुकि* नाम से, कोविदारक्षेत्र में *युगाध्यक्ष*, एवं स्त्रीराज्य में *सुरप्रिय* नाम से मेरी आराधना करनी चाहिये॥ १००॥

**पूर्णगिर्यां *सुभोगश्च* शाल्मल्यां *तक्षकस्तथा*।**
**अमरे *पापहा* चैव अम्बिकायां *सुदर्शनः*॥ १०१॥**

पूर्णगिरि पर *सुभोग,* तथा शाल्मलीवन में *तक्षक* नाम से, अमरतीर्थ में *पापहा* नाम से एवं अम्बिकातीर्थ में *सुदर्शन* नाम से मेरा स्मरण करना चाहिये॥ १०१॥

**नरवाप्यां *महावीरः* कान्तारे *दुर्गनाशनः*।**
**पद्मवत्यां *पद्मगृहो* गगने *मृगलाञ्छनः*॥ १०२॥**

*नरवापी क्षेत्र में* महावीर, कान्तार (जङ्गल) में *दुर्गनाशन* पद्मवती में *पद्मगृह* तथा गगनतीर्थ में मृगलाञ्छन नाम से भक्तों को मेरी आराधना करनी चाहिये॥ १०२॥

**माहात्म्य**

**अष्टोत्तरं नामशतं यत्रैतत् परिपठ्यते।**
**तत्रैव मम सान्निध्यं त्रिसन्ध्यं मधुसूदन!॥ १०३॥**

**स्तोत्र का माहात्म्य—** हे मधुसूदन! जहाँ भी तीनों कालों में मेरा यह अष्टोत्तरशत नामक स्तोत्र भक्तिपूर्वक पढ़ा जायगा वहाँ मैं तत्काल प्रत्यक्ष उपस्थित हो जाऊँगा॥ १०३॥

**एतेषामपि यस्त्वेकं पश्येद्वै बालरूपिणम्।**
**सर्वेषां लभते पुण्यं पूर्वोक्तानां च वेधसाम्॥ १०४॥**

जो भी कोई भक्त मेरे इन सौ नामों में से एक बालरूपी ब्रह्मा का भी दर्शन कर लेगा तो वह इन सौ ब्रह्माओं के रूपों के दर्शन का पुण्यफल प्राप्त करेगा॥ १०४॥

**एतैर्यो नामभिः कृष्ण प्रभासे स्तौति मां सदा।**
**स्थानं मे विजयं लब्ध्वा मोदते शाश्वतीः समाः॥ १०५॥**
**कायिकं वाचिकं चैव मानसं चैव दुष्कृतम्।**
**तत् सर्वं नाशमायाति मम स्तोत्रानुकीर्तनात्॥ १०६॥**

हे कृष्ण! प्रभास क्षेत्र में इन नामों से जो मेरी स्तुति करता है, यह मेरे स्थान में विजय प्राप्त कर निरन्तर दीर्घकाल तक वास करता है। मेरे भक्तों से जो भी शरीर, वाणी या मन द्वारा किये गये पाप होंगे

वे सभी इस अष्टोत्तरशत नाम स्तोत्र पाठ से विनष्ट हो जाते हैं ॥ १०५-१०६ ॥

**पुष्पोपहारैर्धूपैश्च ब्राह्मणानां च तर्पणैः ।**
**ध्यानेन च स्थिरेणाशु प्राप्यते यत्फलं नरैः ॥ १०७ ॥**
**तत् फलं समवाप्नोति मम स्तोत्रानुकीर्तनात् ॥ १०८ ॥**

भक्तजनों द्वारा देव-मूर्ति को फूलों की माला पहना कर, धूप-दीप निवेदन कर, ब्राह्मणों की तृप्ति कराकर या एकाग्रचित्त से ध्यान कर जो पुण्यफल प्राप्त किया जाता है; वही फल इस एकाकी स्तोत्र-पाठ से भी प्राप्त किया जा सकता है ॥ १०७-१०८ ॥

**ब्रह्महत्यादिपापानि इह लोके कृतान्यपि ।**
**अकामतः कामतो वा तानि नश्यन्ति तत्क्षणात् ॥ १०९ ॥**

उनके द्वारा इस लोक में जो भी इच्छा या अनिच्छा पूर्वक ब्रह्महत्यादि पाप किये जा चुके हों वे भी इस स्तोत्र पाठ के प्रभाव से तत्क्षण ही नष्ट हो जाते हैं ॥ १०९ ॥

**इदं स्तोत्रं ममाभीष्टं शृणुयाद्वा पठेच्च वा ।**
**स मुक्तः पातकैः सर्वैः प्राप्नुयान्महदीप्सितम् ॥ ११० ॥**

यह स्तोत्र मुझे अत्यन्त अभीष्ट है, अतः जो भी इसका पाठ या श्रवण करेगा वह सभी पापों से मुक्त हो जायगा तथा उसकी बड़ी से बड़ी मनःकामना भी अवश्य पूर्ण होगी ॥ ११० ॥

## प्रभास तीर्थ में कुछ विशेष तिथियों का महत्त्व

**अन्यद् रहस्यं ते वच्मि शृणु कृष्ण! यथार्थतः ।**
**आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवतिक्क चित् ॥ १११ ॥**
**महती सा तिथिर्ज्ञेया प्रभासे मम वल्लभा ॥ ११२ ॥**

हे कृष्ण! सुनिये, मैं तुम्हें एक अन्य यथार्थ रहस्य की बात बताना चाहता हूँ। वह यह है कि यदि कार्तिक मास की किसी तिथि से कृत्तिका (या अगस्त्य) नक्षत्र सम्पृक्त हो तो वह तिथि मुझे बहुत ही प्रिय है। अतः उस तिथि के दिन प्रभास क्षेत्र में की गयी मेरी पूजा मुझे बहुत प्रिय है ॥ १११-११२ ॥

**प्राजापत्यं यदा ऋक्षं तिथौ तस्यां भवेद् यदि।**
**सा महाकार्त्तिकी पुण्या देवानामपि दुर्लभा॥ ११३॥**

इसी तरह कार्तिक मास की जिस तिथि में रोहिणी नक्षत्र संलग्न हो वह कार्तिकी तिथि देवताओं को भी मेरी पूजा के लिये दुर्लभ है; क्योंकि वह महाकार्त्तिकी तिथि अत्यधिक पुण्यप्रद है॥ ११३॥

**मन्दे वार्के गुरौ वापि कार्त्तिकी कृतिकायुता।**
**तत्राश्वमेधिकं पुण्यं दृष्ट्वा वै बालरूपिणम्॥ ११४॥**

गुरु, शनि (मन्द) या रवि के दिन कृत्तिका तिथि से युक्त कार्तिकी पूर्णिमा के दिन बालरूपी ब्रह्मा का दर्शन अश्वमेध यज्ञ के तुल्य फलप्रद होता है॥ ११४॥

**विशाखासु यदा सूर्यः कृत्तिकासु च चन्द्रमाः।**
**स योगः पद्मको नाम प्रभासे दुर्लभो हरे॥ ११५॥**

जब सूर्य विशाखा नक्षत्र से युक्त हो तथा चन्द्रमा कृत्तिका नक्षत्र से, तब हे कृष्ण! वह योग प्रभास तीर्थ में 'पद्मक' नाम से प्रसिद्ध होता है॥ ११५॥

**तस्मिन् योगे नरो दृष्ट्वा प्रभासे बालरूपिणम्।**
**पापकोटियुतो वापि यमलोकं न पश्यति॥ ११६॥**

इस शुभ योग में यदि कोई भक्त जन प्रभास तीर्थ में बालरूप ब्रह्मा का दर्शन करे तो वह करोड़ों पाप करके भी यमलोक- (नरक-) गामी नहीं होता॥ ११६॥

**ईश्वर०**

**इत्येवं कथितं स्तोत्रं ब्रह्मणा हरये पुनः।**
**मया तव समाख्यातं माहात्म्यं ब्रह्मदैवतम्॥ ११७॥**

**शङ्कर—** इस तरह यह स्तोत्र ब्रह्माजी ने भगवान् विष्णु को सुनाया था। उसी तरह मैंने भी आपको यह ब्रह्मदेव का स्तोत्र माहात्म्य सहित सुना दिया॥ ११७॥

**सर्वपापहरं नृणां श्रुतं सर्वार्थसाधकम्।**
**भूमिदानं च दातव्यं तत्र यात्राफलेप्सुभिः॥ ११८॥**

इस स्तोत्र को यदि प्रतिदिन सुना जाय तो यह सब प्रकार के पापों का नाशक होता है तथा सभी मन:कामनाओं की पूर्ति करने वाला है। प्रभासतीर्थ की यात्रा का फल चाहने वाले भक्तों को यात्रा से पूर्व सत्पात्र को कुछ न कुछ भूमिदान अवश्य करना चाहिये॥ ११८॥

**कमण्डलुः श्वेतवस्त्रं महादानानि षोडश।**
**तत्रैव देवि देयानि ब्रह्मणे बालरूपिणे॥ ११९॥**

हे देवि! वहाँ (प्रभास में) जाकर बालरूप ब्रह्मा के निमित्त भक्तों को कमण्डलु, श्वेतवस्त्र एवं सोलह (१६) महादान अवश्य करने चाहिये॥ ११९॥

**महापर्वणि सम्प्राप्ते कुर्युः पारायणं द्विजाः।**
**सर्वे ते ब्राह्मणा देवि क्षेत्रमध्यनिवासिनः॥ १२०॥**

*श्रीस्कान्दे महापुराणे एकाशीतिसाहस्र्यां संहितायां*
*सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये*
*बालरूपिब्रह्मणो माहात्म्यवर्णनं नाम*
*सप्तोत्तरशततमोऽध्यायः सम्पूर्णः॥*

महापर्व आने पर जो ब्रह्मा के भक्त इस स्तोत्र का पारायण करते हैं हे देवि! वे सभी भक्त ब्रह्माजी द्वारा प्रभासक्षेत्र के वासी ही माने जाते हैं॥ १२०॥

*स्कन्दमहापुराण नामक इक्कासी हजार वाली संहिता से*
*सम्पृक्त प्रभासखण्ड में प्रथम प्रभासक्षेत्रमाहात्म्य के*
*वर्णन-प्रसङ्ग में बालरूप ब्रह्मा का वर्णन नामक*
*एक सौ सातवाँ अध्याय सम्पूर्ण हुआ॥*

❋❋❋

## दीर्घायु होने के लिए जप

स्वयम्भूः प्रथमे कल्पे द्वितीये पद्मभूः स्थितः।
तृतीये विश्वकर्त्तेति बालरूपी चतुर्थके॥
एतानि मुख्यनामानि कथितानि स्वयम्भुवः।
नित्यं संस्मरते यस्तु स दीर्घायुर्नरो भवेत्॥

(स्कन्दपुराणतः)